॥ श्रीजिनाय नमः ॥

# ॥ श्रीगुणस्थानक्रमारोहवृत्तिः ॥

( कर्त्ता श्रीरत्नशेखरसूरि )

छपावी प्रसिद्ध करनार.
पण्डित श्रावक हीरालाल हंसराज. ( जामनगरवाला )
संवत्—१९६७. सने १९१०.
किं. रु. १—८—०

☞ जामनगर जैनभास्करोदय छापखानामां छप्युं.

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीगुणस्थानक्रमारोहवृत्तिः प्रारभ्यते ॥

( कर्त्ता श्रीरत्नशेखरसूरिः )

छपावी प्रसिद्ध करनार पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

अर्हं पदं हृदि ध्यात्वा । गुणस्थानविचारणां ॥ अनुष्टुभामियं वृत्ति-र्लिख्यते ह्यवचूर्णिवत् ॥ १ ॥ तत्रादौ मंगलार्थमभीष्टदैवतनमस्कारसंबंधाविर्भावक्रमाद्यपद्यमाह—

गुणस्थानक्रमारोह-हतमोहं जिनेश्वरं ॥ नमस्कृत्य गुणस्थान-स्वरूपं किंचिदुच्यते ॥ ॥ १ ॥

व्याख्या—यत्र यत्र पूर्वाऽप्राप्तगुणविशेषाविर्भावो भवति तत्तद्गुणस्थानमित्युच्यते, तानि गुणस्थानानि. तेषां स्वरूपं किंचिदल्पमात्रमुच्यत इति संबंधः. किं कृत्वा? नमस्कृत्य प्रणिपत्य जिनेश्वरं श्रीसर्वज्ञं, कथं भूतं? गुणस्थानक्रमारोहहतमोहं, गुणस्थानानां क्रमो गुणस्थानक्रमः, गुणस्थानक्रमेणारोहणं गुणस्थानक्रमारोहः, गुणस्थानक्रमारोहलक्षणेन

हतो मोहो येन स तथा तं गुणस्थानक्रमारोहहतमोहं, क्षपकश्रेण्यारोहक्रमेणैव मोहो हन्यते, यदाह वाचकमुख्यः—

पूर्वं करोत्यनंता—नुबंधिनाम्नां क्षयं कषायाणां ॥ मिथ्यात्वमोहगहनं । क्षपयति सम्यक्त्वमिथ्यात्वं ॥ १ ॥ सम्यकत्वमोहनीयं । क्षपयत्यष्टावतः कषायांश्च ॥ क्षपयति ततो नपुंसक—वेदं स्त्रीवेदमथ तस्मात् ॥ २ ॥ हास्यादि ततः षट्कं । क्षपयति तस्माच्च पुरुषवेदमपि ॥ संज्वलनानपि हत्वा । प्राप्नोत्यथ वीतरागत्वं ॥ ३ ॥ आह—ननु हतमोहमित्यत्रोक्तं, तत्र ह्येकस्यैव मोहस्य घातेन जिनेश्वरत्वमुपपद्यते, किंतु ज्ञानावरणदर्शनावरणांतरायाणामपि घाते जिनेश्वरत्वं स्यात्, तत्कथमित्यत्रोच्यते—अष्टस्वपि कर्मसु मोहस्यैव प्राधान्यं, यतः—अस्काण रसणी कम्माण—मोहणी तह वयाण बंभवयं ॥ गुत्तीण य मणगुत्ती । चउरो दुक्खेण जिप्पंति ॥ १ ॥ मोहे हते विशेषकर्माणि सुखहतान्येव, यदागमः—जह मत्थय सूईए । हयाए हम्मए तलो ॥ तह कम्माणि हम्मंति । मोहणिज्जे खयं गए ॥ १ ॥ ततो मोहघाते शेषघातिनां घातोऽवश्यं ज्ञातव्येवेति न दोषः, अथ चतुर्दशसंख्यानां गुणस्थानकानां

नामान्येव श्लोकचतुष्टयेनाह—

चतुर्दशगुणश्रेणि–स्थानकानि तदादिमं ॥ मिथ्यात्वाख्यं द्वितीयं तु । स्थानं सासाद-नाभिधं ॥ २ ॥ तृतीयं मिश्रकं तुर्यं । सम्यग्दर्शनमव्रतं ॥ श्राद्धत्वं पंचमं षष्टं । प्रमत्तश्रम-णाभिधं ॥ ३ ॥ सप्तमं त्वप्रमत्तं चा–ऽपूर्वात्करणमष्टमं ॥ नवमं चानिवृत्त्याख्यं । दशमं सूक्ष्मलोभकं ॥ ४ ॥ एकादशं शांतमोहं । द्वादशं क्षीणमोहकं ॥ त्रयोदशं सयोग्याख्य–मयोग्याख्यं चतुर्दशं ॥ ५ ॥ व्याख्या—इह हि भव्यजीवानां सिद्धिसौधाधिरोहणार्थं गुण-श्रेणिरेव निःश्रेणिस्तस्यां च पदन्यासास्पदस्थानीयानि गुणाद्गुणांतरप्राप्तिरूपाणि स्थानानि विश्रामधामानि चतुर्दशसंख्यानि, तेषां नामानि यथा—प्रथमं मिथ्यात्वगुणस्थानकं १, द्वितीयं सासादनगुणस्थानकं २, तृतीयं मिश्रगुणस्थानकं ३, चतुर्थमविरतसम्यग्दृष्टिगुणस्थान-कं ४, पंचमं देशविरतिगुणस्थानकं ५, षष्टं प्रमत्तसंयतगुणस्थानकं ६, सप्तममप्रमत्तसंयत-गुणस्थानकं ७, अष्टमं निवृत्तिगुणस्थानकं ८, नवमं निवृत्तिबादरगुणस्थानकं ९, दशमं सूक्ष्मसंपरायगुणस्थानकं १०, एकादशमुपशांतमोहगुणस्थानकं ११, द्वादशं क्षीणमोहगुणस्था-

नकं १२, त्रयोदशं सयोगिकेवलिगुणस्थानकं १३, चतुर्दशमयोगिकेवलिगुणस्थानक १४ मिति. अथ प्रथमं व्यक्ताव्यक्तमिथ्यात्वस्वरूपमाह—

अदेवागुर्वधर्मेषु । या देवगुरुधर्मधीः ॥ तन्मिथ्यात्वं भवेद्व्यक्त–मव्यक्तं मोहलक्षणं ॥ ॥ ६ ॥ व्याख्या—या स्पष्टचैतन्यानां संज्ञिपंचेंद्रियादिजीवानामदेवागुर्वधर्मेषु क्रमेण देवगुरुधर्मबुद्धिः संपद्यते, तद्व्यक्तं मिथ्यात्वं भवति. उपलक्षणात्—जीवाइपयत्थेसु । जिणोवइट्ठेसु जा असद्दहणा ॥ सद्दहणावि अ मिच्छा–विपरीअपरूवणाजाया ॥ १ ॥ संकरणं जंचिअ । जो तेसु अणायरो पयत्थेसु ॥ तं पंचविहं मिच्छं । तद्दिट्ठी मिच्छदिट्ठीअ ॥ २ ॥ एतत्पंचविधमपि मिथ्यात्वं व्यक्तमेव. अथवा—आभिग्गहिअमणाभि–ग्गहियं तहाभिनिवेसिअं चेव ॥ संसइअमणाभोगं । मिच्छत्तं पंचहा होइ ॥१॥ इत्यत्रापि यदेकमनाभोगिकमिथ्यात्वं तदव्यक्तं, शेषमिथ्यात्वचतुष्टयं तु व्यक्तमेव. तथा दसविहे मिच्छत्ते पन्नत्ते तं जहा—

अधम्मे धम्मसन्ना, धम्मे अधम्मसन्ना, उमग्गे मग्गसन्ना, मग्गे उमग्गसन्ना, अजीवेसु जीवसन्ना, जीवेसु अजीवसन्ना, असाहुसु साहुसन्ना, साहुसु असाहुसन्ना, असुत्तेसु सुत्तस-

न्ना, सुत्तेसु असुत्तसन्ना, इत्येवमादिकमपि यन्मिथ्यात्वं तद्व्यक्तमेव. अपरं तु यदनादिकालं यावन्मोहनीयप्रकृतिरूपं मिथ्यात्वं सद्दर्शनरूपात्मगुणाच्छादकं जीवेन सह सदाऽविनाभावि भवति तदव्यक्तं मिथ्यात्वमिति. ॥ ६ ॥ अथ मिथ्यात्वस्य गुणस्थानकत्वमाह—अनाद्यव्यक्तमिथ्यात्वं । जीवेऽस्त्येव सदा परं ॥ व्यक्तमिथ्यात्वधीप्राप्ति–र्गुणस्थानतयोच्यते ॥ ७ ॥ व्याख्या—अनादि च तदव्यक्तं च अनाद्यव्यक्तं, तच्च तन्मिथ्यात्वं च अनाद्यव्यक्तमिथ्यात्वं जीवे प्राणिनि अव्यवहारराशिवर्त्तिनि सदा सर्वदाप्यस्त्येव, परं व्यक्तमिथ्यात्वस्य पूर्वोक्तस्वरूपधीर्बुद्धिस्तत्प्राप्तिरेव गुणस्थानतयोच्यत इति. आह—ननु ' सव्वजीअट्ठाण मिच्छे ' इति मिथ्यादृष्टौ सर्वाण्यपि जीवस्थानानि लभ्यंते तत्कथं व्यक्तमिथ्यात्वधीप्राप्तिरेव प्रथमगुणस्थानतामाप्नोति ? इत्यत्रोच्यते—सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनंतश इति वचनात् ये प्राप्तव्यक्तमिथ्यात्वबुद्धयो जीवा व्यवहारराशिवर्त्तिनस्त एव प्रथमगुणस्थाने लभ्यंते. नत्वव्यवहारराशिवर्त्तिनः, तेषामव्यक्तमिथ्यात्वस्यैव सद्भावादित्यदोषः ॥ ७ ॥ अथ मिथ्यात्वदूषणमाह—

मद्यमोहाद्यथा जनो । न जानात्यहिताहितं ॥ धर्माधर्मौ न जानाति । तथा मिथ्यात्वमोहितः ॥ ८ ॥ व्याख्या—यथा जीवो मनुष्यादिप्राणी मद्यमोहान्मदिरोन्मादात् हितं वाऽहितं वा किमपि न जानाति नष्टचैतन्यवत्, तथा मिथ्यात्वमोहितो जीवो धर्माधर्मौ सम्यग्न जानात्यज्ञानत्वात्. यदाह—मिथ्यात्वेनालीढचित्ता नितांतं । तत्वातत्वं जानते नैव जीवाः ॥ किं जात्यंधाः कुत्रचिद्वस्तुजाते—रम्यारम्यव्यक्तिमासादयेयुः ॥ १ ॥ इति ॥ ८ ॥ अथ मिथ्यात्वस्य स्थितिमाह—

अभव्याश्रितमिथ्यात्वे—ऽनाद्यनंता स्थितिर्भवेत् ॥ सा भव्याश्रितमिथ्यात्वे—ऽनादिसांता पुनर्मता ॥ ९ ॥ व्याख्या—अभव्यजीवानाश्रित्य मिथ्यात्वे सामान्येनाव्यक्तमिथ्यात्वविषयेऽनाद्यनंता स्थितिर्भवति, तथा सैव स्थितिर्भव्यजीवान् पुनराश्रित्याऽनादिसांता पुनर्मता संमता. यदाह—मिच्छत्तमभव्वाणंत—मणाइमणंतयं मुणेयव्वं ॥ भव्वाणं तु अणाइ । सपज्जवसियं तु मिच्छत्तं ॥ १ ॥ इयं च स्थितिः सामान्येन मिथ्यात्वमाश्रित्य दर्शिता. यदि पुनर्मिथ्यात्वगुणस्थानस्थो जीवो विंशत्युत्तरशतबंधप्रायोग्यकर्मप्रकृतीनां मध्यात्तीर्थकृत्कर्मा-

हारकद्र्याबंधात्सप्तदशोत्तरशतबंधकः, तथा द्वाविंशत्युत्तरशतोदयप्रायोग्यकर्मप्रकृतीनां मध्यात्सम्यक्त्वमिश्रसम्यक्त्वाहारकद्विकतीर्थकृत्कर्मेति पंचप्रकृतीनामनुदयात्सप्तदशोत्तरशतवेदिता, अथ चत्वारिंशदधिकशतसत्ताको भवति. ॥ इति प्रथमं गुणस्थानं. ॥ १ ॥ अथ द्वितीयं सासादनगुणस्थानमूलकारणभूतौपशमिकसम्यक्त्वस्वरूपमाह—

अनादिकालसंभूत–मिथ्याकर्मोपशांतितः ॥ स्यादौपशमिकं नाम । जीवे सम्यक्त्वमादितः ॥ १० ॥ व्याख्या–जीवे भव्यजीवविषयेऽनादिकालसंभूतकर्मोपशांतितोऽनादिकालोद्भवमिथ्यात्वकर्मोपशमादादितो ग्रंथिभेदकरणकालादौपशमिकं नाम सम्यक्त्वं स्यादिति सामान्योऽर्थः, विशेषार्थस्त्वयं—औपशमिकं सम्यक्त्वं द्विधा, एकमंतरकरणौपशमिकं, द्वितीयं स्वश्रेणिगतौपशमिकं. तत्रापूर्वकरणेनैव कृतग्रंथिभेदस्याऽकृतत्रिपुंजीकरणस्य मिथ्यात्वकर्मपुद्गलराशेरेवाविहिताशुद्धार्धशुद्धमिथ्यात्वमिश्रसम्यक्त्वस्वरूपत्रिपुंजस्योदीर्णे मिथ्यात्वे क्षीणेऽनूदीर्णे च प्राप्तस्य इति अंतरकरणांतर्मुहूर्तकालं यावत्सर्वमिथ्यात्वावेदकस्यांतरकरणौपशमिकसम्यक्त्वमेकवारमेव भवति. तथोपशमश्रेणिप्रपन्नस्य मिथ्यात्वानंतानुबंधिनामुपशमे

सति स्वश्रेणिगतौपशमसम्यक्त्वं भवति. तथा चोच्यते—अकयतिपुंजो ऊसर–ईलियदड्ढरुक्खनाएहिं ॥ अंतरकरणुवसमिओ । उवसमिओ वाससेणिगओ ॥ १ ॥ तदेतद् द्विभेदमप्यौपशमिकसम्यक्त्वं सासादनोत्पत्तिमूलकारणमिति. ॥ १० ॥ अथ सासादनस्वरूपं पद्यद्वयेनाह—

एकस्मिन्नुदिते मध्या–च्छांतानंतानुबंधिनां ॥ आद्यौपशमिकसम्यक्त्व–शैलमौलेः परिच्युतः ॥ ११ ॥ समयादावलीषट्कं । यावन्मिथ्यात्वभूतलं ॥ नासादयति जीवोऽयं । तावत्सासादनो भवेत् ॥ १२ ॥ व्याख्या—औपशमिकसम्यक्त्ववानयं जीवः शांतानंतानुबंधिनां मध्यादेकस्मिन्नपि क्रोधादावुदीर्णे सति आद्यमौपशमिकसम्यक्त्वं शैलमौलिकल्पं गिरिशिखरतुल्यं, ततः परिच्युतो भ्रष्टो यावन्मिथ्यात्वभूमिमंडलं न प्राप्नोति तावत्समयाद्यावलीषट्कांतकालं सासादनगुणस्थानवर्त्ती भवति. यदाह—उवसमअद्धाइठिओ । मिच्छमपमत्तो तमेव गंतुमणो ॥ सम्मं आसायंतो । सासायणिमो मुणेयव्वो ॥१॥ आह—ननु व्यक्तमिथ्यात्वधीप्राप्तिरूपस्याद्यस्य मिश्रादीनां च गुणस्थानानामुत्तरोत्तरारोहरूपाणां गुणस्थानत्वं युक्तं, परं सम्यक्त्वाप्रपातरूपस्य सासादनस्य गुणस्थानकत्वं कथमित्यत्रोच्यते—मिथ्यात्वगुणस्थानमा-

अत्र सासादनस्याप्यूर्ध्वास्पदारोह एवास्ते, यतो मिथ्यात्वगुणस्थानमभव्यानामपि भवति, सासादनं तु भव्यानामेव, भव्येष्वप्यर्धपुद्गलपरावर्त्तावशेषसंसाराणामेव. यदाह— अंतोमुहुत्तमित्तंपि । फासियं हुज्ज जेहिं सम्मत्तं ॥ तेसिं अवड्ढपुग्गल–परिअट्टो चेव संसारो ॥ १ ॥ इति सासादनस्यापि मिथ्यात्वगुणस्थानारोहरूपं गुणस्थानत्वं भवतीत्यदोषः. तथा सासादनस्थो जीवो मिथ्यात्वनरकत्रिकैकेंद्रियादिजातिचतुष्कस्थावरचतुष्कातपहुंडसेवार्त्तनपुंसकवेदरूपषोडशप्रकृतीनां बंधव्यवच्छेदादेकोत्तरशतबंधकः, तथा सूक्ष्मत्रिकातपमिथ्यात्वोदयव्यवच्छेदोत्तरकालानुपूर्व्यनुदयाच्चैकादशोत्तरशतवेदयिता. तथा तीर्थकृत्सत्तासंभवात्सप्तचत्वारिंशदधिकसत्ताको भवति. ॥ १२ ॥ इति द्वितीयं गुणस्थानकं ॥ अथ तृतीयं मिश्रगुणस्थानकमाह—

मिश्रकर्मोदयाज्जीवे । सम्यग्मिथ्यात्वमिश्रितः ॥ यो भावोंतर्मुहूर्त्तं स्यात्तन्मिश्रस्थानमुच्यते ॥ १३ ॥ व्याख्या—दर्शनमोहनीयप्रकृतिरूपमिश्रकर्मोदयाज्जीवे जीवविषये यः समकालं समरूपतया सम्यक्त्वे मिथ्यात्वे च मिलितो मिश्रितो भावोंतर्मुहूर्त्तं यावद्भवेत्, त-

न्मिश्रगुणस्थानमुच्यते. यस्तु सम्यक्त्वमिथ्यात्वयोरेकतरे भावे वर्त्तते स मिश्रगुणस्थान-
स्थाने भवति, यतोऽत्र मिश्रत्वमुभयभावयोरेकत्वरूपं जात्यंतरमेव. ॥ १३ ॥ अत्रोभयभा-
वयोरेकत्वे जात्यंतरसमुद्भूतिं सदृष्टांतां श्लोकद्वयेनाह—

जात्यंतरसमुद्भूति–र्वडवाखरयोर्यथा ॥ गुडदध्नोः समायोगे । रसभेदांतरं यथा ॥ १४ ॥
तथा धर्मद्वये श्रद्धा । जायते समबुद्धितः ॥ मिश्रोऽसौ भण्यते तस्मा–द्भावो जात्यंतरात्मकः
॥ १५ ॥ व्याख्या—यथा येन प्रकारेण वडवाखरयोः समायोगेनाश्वो जायते, न रासभः,
किंतु वेसररूपा जात्यंतरसमुद्भूतिर्भवति; तथा गुडदध्नोः समायोगे न गुडरसो व्यक्तो भवति,
न च दधिरसः, किंतु शिखरिणीरूपा रसभेदांतरसमुद्भूतिर्भवति. तथा तेन प्रकारेण यस्य ध-
र्मद्वये सर्वज्ञाऽसर्वज्ञप्रणीते समबुद्धितया श्रद्धा जायते, स जात्यंतरभेदात्मकमिश्रगुणस्था-
नस्थो भवतीति. यदाह—जह गुडदहीणि महियाणि । भावसहिआणि हुंति मीसाणि ॥
भुंजंतस्स तहोभय । तहिठ्ठी मीसदिठ्ठी य ॥१॥ अथ गुणस्थानस्थो जीवो यन्न करोति तदाह—

आयुर्बध्नाति नो जीवो । मिश्रस्थो म्रियते न वा ॥ सद्दृष्टिर्वा कुदृष्टिर्वा । भूत्वामरण-

मश्नुते ॥ १६ ॥ व्याख्या—मिश्रस्थो जीवो नायुर्बध्नाति परभवयोग्यायुर्बंधं न करोति. न च मिश्रस्थो जीवो म्रियते, न मरणमप्याप्नोति. किंतु सद्दृष्टिर्भूत्वा सम्यग्दृष्टिगुणस्थानमारुह्य म्रियते, अथवा कुदृष्टिर्भूत्वा मिथ्यादृष्टिगुणस्थानमागत्य म्रियते, न तु मिश्रस्थ एव म्रियते. तथा मिश्रे इव क्षीणमोहे सयोगिनि वर्त्तमानो जीवो न म्रियते, परेष्वेकादशसु मिथ्यात्वसास्वादनाविरतदेशविरतप्रमत्ताप्रमत्तापूर्वनिवृत्तसूक्ष्मसंपरायोपशांतमोहायोगिकेवलिरूपेषु गुणस्थानकेषु वर्त्तमानो म्रियते. तथा तेष्वेकादशसु मरणगुणस्थानकेषु मिथ्यात्वसास्वादनाविरतसम्यग्दृष्टिलक्षणानि त्रीणि गुणस्थानकानि जीवेन सह परभवमप्यनुयांति, न चापराण्यष्टौ गुणस्थानानि. यदाह—मीसखीणसंजोगे । न मरइ अवरेसु मरइगारससु ॥ अविरयमिच्छदुगं सम्मं । परभवमणुजंति नो अट्ठं ॥ १६ ॥ अथ बद्धायुषो मिश्रस्थस्य मृतिं गतिं चाह—

सम्यग्मिथ्यात्वयोर्मध्ये । ह्यायुर्येनार्जितं पुरा ॥ म्रियते तेन भावेन । गतिं याति तदाश्रितां ॥ १७ ॥ व्याख्या—येन बद्धायुषा जीवेन मिश्रभावावस्थायाः पुरा पूर्वं येन सम्य-

त्त्वमिथ्यात्वयोरेकतरेण भावेन कृत्वायुःकर्म बद्धं, स जीवो मिश्रभावमनुभूयापि पुनस्तेनैव भावेन म्रियते, तदाश्रितां गतिं च याति गच्छति. तथा मिश्रगुणस्थानस्थो जीवस्तिर्यक्त्रिकस्त्यानर्द्धित्रिकदुर्भगदुःस्वरानादेयानंतानुबंधिमध्याकृतिमध्यसंहननचतुष्कनीचैर्गोत्रोद्योताप्रशस्तविहायोगतिस्त्रीवेदरूपपंचविंशतिप्रकृतिबंधव्यवच्छेदान्मनुष्यदेवायुषोरबंधाच्च चतुःसप्ततेर्बंधकः, तथानंतानुबंधिस्थावरैकेंद्रियत्रिकल त्रिकोदयव्यवच्छेदाद्देवमनुष्यतिर्यगनुपूर्व्यनुदयाच्च मिश्रोदयाच्च शतस्योदयिता, सप्तचत्वारिंशदधिकशतसत्ताको भवति ॥१७॥ इति तृतीयं गुणस्थानकं ॥ अथ चतुर्थमविरतसम्यग्दृष्टिगुणस्थानकं, तत्र प्रथमं सम्यक्त्वप्राप्तिस्वरूपमाह—

यथोक्तेषु च तत्वेषु । रुचिर्जीवस्य जायते ॥ निसर्गादुपदेशाद्वा । सम्यक्त्वं हि तदुच्यते ॥ १८ ॥ व्याख्या—जीवस्य भव्यस्य संज्ञिपंचेंद्रियप्राणिनो यथोक्तेषु यथावत्सर्ववित्प्रणीतेषु तत्वेषु जीवादिपदार्थेषु निसर्गात्पूर्वभवाभ्यासविशेषजनितात्यंतनैर्मल्यगुणात्मकात्मस्वभावादुपदेशाद्वा सद्गुरूपदिष्टशास्त्रश्रवणात् या श्रद्धारुचिरुपा भावना जायते समुत्पद्यते, हि स्फुटं तत्सम्यक्त्वं सम्यक्श्रद्धानलक्षणमुच्यते. यदाह—

रुचिर्जिनोक्ततत्त्वेषु । सम्यक् श्रद्धानमुच्यते ॥ जायते तन्निसर्गेण । गुरोरधिगमेन वा ॥ ॥ १८ ॥ अथाविरतसम्यग्दृष्टित्वं यथास्यात्तथाह —

द्वितीयानां कषायाणा–मुदयाद्व्रतवर्जितं ॥ सम्यक्त्वं केवलं यत्र । तच्चतुर्थं गुणास्पदं ॥

॥ १९ ॥ व्याख्या——द्वितीयानां कषायाणामप्रत्याख्यानसंज्ञितानां क्रोधादीनामुदयाद्व्रतवर्जितं विरतिरहितं, अत एव केवलं सम्यक्त्वमात्रं यत्र भवति, तच्चतुर्थं गुणास्पदं अविरतसम्यग्दृष्टिनामकं गुणस्थानकं भवति. अयमर्थः——

यथा कश्चित्पुरुषो न्यायोपपन्नधनभोगविलाससुखसौंदर्यशालिकुलसमुत्पन्नोऽपि दुरंतद्यूतादिव्यसनाचीर्णानेकाऽन्यायोत्पादितापराधलब्धराजदंडखंडितातिमानश्चंडदंडपाशिकैर्विडंब्यमानः स्वकं व्यसनजनितं कुत्सितं कर्म विरूपं जानन् स्वकुलसुखसौंदर्यसंपदभिलषन्नप्यारक्षकाणां सकाशादुच्छ्वसितुमपि न शक्नोति; तथायं जीवोऽविरतत्वं कुत्सितकर्मकल्पं जानन् विरतिसुखसौंदर्यमभिलषन्नपि आरक्षककल्पद्वितीयकषायाणां सकाशाद्व्रतोत्साहमपि कर्तुं न शक्नोति, अविरतसम्यग्दृष्टित्वमनुभवतीत्यर्थः ॥ १९ ॥ अथ चतुर्थगुणस्थानकस्थिति-

माह—

उत्कृष्टास्य त्रयस्त्रिंश–त्सागरा साधिका स्थितिः ॥ तदर्द्धपुद्गलावर्त्त–जवैर्जव्यैरवाप्यते ॥ ॥ २० ॥ व्याख्या—अस्याऽविरतिसम्यग्दृष्टिगुणस्थानकस्योत्कृष्टा स्थितिस्त्रयस्त्रिंशत्सागरोपमप्रमाणा सातिरेका जवति, सा च सर्वार्थसिद्ध्यादिविमानस्थितिरूपा मनुष्यायुरधिका ज्ञेया. तथैतत्सम्यक्त्वमर्द्धपुद्गलपरावर्त्तशेषजवैरेवावाप्यते, नान्यैरिति प्रतीतमेव ॥ २० ॥ अथ सम्यग्दृष्टिलक्षणान्याह—

कृपाप्रशमसंवेग–निर्वेदास्तिक्यलक्षणाः ॥ गुणा जवंति यच्चित्ते । स स्यात्सम्यक्त्वजूषितः ॥२१॥ व्याख्या—दुःखितेषु जंतुषु डुःखापहारचिंता कृपा १, कोपादिकारणेषूत्पन्नेषु तीव्रानुशयाजावः प्रशमः २, सिद्धिसौधाधिरोहसोपानसमानसम्यग्ज्ञानादिसाधनोत्साहलक्षणो मोक्षाजिलाषः संवेगः ३, अत्यंतकुत्सिततरसंसारवारकानिर्गमद्वारोपमपरमवैराग्यप्रवेशरूपो निर्वेदः४, श्रीसर्वज्ञप्रणीतसमस्तजावानामस्तित्वनिश्चयचिंतनमास्तिक्यं ५, तदेते कृपाप्रशमसंवेगनिर्वेदास्तिक्यलक्षणा गुणा यस्य चित्ते जवंति स जव्यजंतुः सम्यक्त्वालंकृतो जवति ॥२१॥ अथ

सम्यग्दृष्टिगुणस्थानवर्त्तिनां गतिमाह—

क्षायोपशमिकी दृष्टिः । स्यान्नरामरसंपदे ॥ क्षायिक्यनुत्तवेत्तत्र । त्रितुर्ये वा विमुक्तये ॥२४॥ व्याख्या—अत्र जीवपरिणामविशेषरूपं करणमुच्यते. तत्त्रिधा—यथाप्रवृत्तिकरणं, अपूर्वकरणं अनिवृत्तिकरणं चेति. तत्र गिरिसरिज्जलोपलाह्यमानपाषाणवद् घंचनान्यायेन जीव आयुर्वर्जकर्माणि किंचिदूनैककोटाकोटिसागरस्थितिकानि कुर्वन् येनाध्यवसायविशेषेण ग्रंथिदेशं यावदायाति, तद्यथाप्रवृत्तिकरणमुच्यते. येनाध्यवसायविशेषेणानिवर्त्तकेन ग्रंथिभेदं कृत्वातिपरमाह्लादजनकं सम्यक्त्वमाप्नोति तदनिवृत्तिकरणमिति. यदाहुः श्रीजिनभद्रगणिक्षमाश्रमणाः—

अंतिमकोडाकोडी । सव्वकम्माणमाउवज्जाणं ॥ पलिआसंखिज्ज इमे । भागे खीणे हवइ गंठी ॥ १ ॥ गंठित्ति अ सुत्तेतु । कक्खडघणरूढगूढगंठिव्व ॥ जीवस्स कम्मजणिउ । घणरागदोसपरिणामो ॥ २ ॥ भिन्नंमि तम्मि लाभो । संमत्ताईणसुक्खहेऊण सोउ ॥ दुलंभोपरिसम—चित्तविघायाइविग्घेहिं ॥ ३ ॥ जा गंठी ता पढमं । गंठिं समइवउउ भवे बीअं ॥ अनियट्टीकरणं पुण । समत्तपुरक्खडे जीवे ॥ ४ ॥ अथवा पथिकत्रयदृष्टांतेन करणत्रययोजना

यथा—जहवा तिन्नि मणूसा । संतडविपहं सहावगमणेणं ॥ वेळाइकमत्तीआ । तुरंति प-
त्ताय दो चोरा ॥ १ ॥ दट्ठुं मग्गतडत्थे । ते एगो मग्गउ पडिनियत्तो ॥ बीउ गहिउ तीउ ।
समइक्कंतो पुरं पत्तो ॥ २ ॥ अडवीभवो मणूसा । जीवा कम्मठिई पहो दीहो ॥ गंठीअ भ-
यठाणं । रागदोसा य दो चोरा ॥ ३ ॥ भग्गो ठिई परिवुड्ढी । गहिउ पुण गंठिउ गउ त-
इउ ॥ सम्मत्तपुरं एवं । जोइज्जा तिन्नि करणाइं ॥ ४ ॥ अथवा पिपिलिकोपमानेन करण-
त्रययोजना—खिइसा भाविअगमणं । थाणूसरणं तउ समुप्पयणं ॥ ठाणं थाणुसिरेवा ।
उद्दरणं वा सुइंगाणं ॥ १ ॥ खिइगमणंपिव पढमं । थाणूसरणंव करणमपुव्वं ॥ उप्पयणंपिव
तत्तो । जीवाणं करणमनिअट्टिं ॥ २ ॥ थाणूव गंठिदेसो । गंठे य सत्तस्स तत्थ वत्थाणं ॥ उ-
यरणंपिव तत्तो । पुणोवि कम्मठिइ विवड्ढी ॥ ३ ॥ इत्यादि. ततो जीवो यथाप्रवृत्तिकरणेन
ग्रंथिदेशं संप्राप्यापूर्वकरणेन ग्रंथिभेदं विधाय कश्चिन्मिथ्यात्वपुद्गलराशिं विभज्य मिथ्यात्व-
मिश्रसम्यक्त्वरूपं पुंजत्रयं कुरुते. ततोऽनिवृत्तिकरणेन विशुद्ध्यमान उदीर्णे मिथ्यात्वे क्षीणे-
ऽनुदीर्णे चोपशांते क्षायोपशमिकं सम्यक्त्वं प्राप्नोति. यदाह—पावंति खवेऊणं । कम्माइं

अहापवत्तकरणेणं ॥ उवलनाएण कहमवि । अन्निन्नपुव्वं तत्तो गंठिं ॥ १ ॥ तं गिरिवरं च भिं-
तुं । अपुव्वकरणुग्गवज्जधाराए ॥ अंतोमुहुत्तकालं । गंतुं अनियट्टिकरणंमि ॥ २ ॥ पइसमयं
सुझंतो । खविउं कम्माइं तत्थ बहुयाइं ॥ मिच्छत्तंमि उइन्ने । खीणे अणुअंमि उवसंते ॥४॥ अ-
न्यच्च—अपुव्वकयतिपुंजो । मिच्छमुइणं खवित्तु अणुइन्नं ॥ उवसामिय अनियट्टी—करणाउ परं
खउवसमी ॥ १ ॥ ततोऽसौ क्षायोपशमिकी दृष्टिः समुत्पन्ना सती जीवानां नरामरसंपदे
देवमानवर्द्धये स्याद्भवेत्. तथापूर्वकरणेनैव कृतत्रिपुंजस्य जीवस्य चतुर्थगुणस्थानादारभ्य क्ष-
पकत्वे प्रारब्धेऽनंतानुबंधिचतुष्कस्य मिथ्यात्वमिश्रसम्यक्त्वरूपपुंजत्रयस्य च क्षये क्षायिकं
सम्यक्त्वं भवति. ततोऽसौ क्षायिकीदृष्टिस्तु पुनरबद्धायुष्कस्य तत्रैव भवे मुक्तये मोक्षाय
स्यात्. बद्धायुष्कस्य तु जीवस्य तृतीये भवे असंख्यातजीविनां प्रायोग्यबद्धायुष्कस्य चतुर्थे
भवे मुक्तये स्यात्. तथा चाह—मिच्छाइखवए खवइ । सो सत्तगखीणिठाबद्धाउ ॥ चउति-
भवभाविमुक्खो । तब्भवसिद्धी अ इअरो अ ॥ २२ ॥ अथाविरतगुणस्थानवर्त्तिनो जीवस्य
कृत्यमाह—

देवे गुरौ च संघे च । सद्भक्तिं शासनोन्नतिं ॥ अव्रतोऽपि करोत्येव । स्थितस्तुर्ये गुणालये ॥ २१ ॥ व्याख्या—तुर्ये चतुर्थे गुणालये गुणस्थाने अविरतसम्यग्दृष्टिलक्षणे वर्त्तमानो जीवोऽव्रतो व्रतनियमरहितो देवे देवविषये, गुरौ गुरुविषये, संघे संघविषये सद्भक्तिं पूजाप्रणतिवात्सल्यादिरूपां करोति, तथा शासनोन्नतिं शासनप्रभावनां करोत्येव, प्रभावकश्रावकत्वात्. यदाह—जो अविरओवि संघे । भत्तिं तित्थुन्नइं सया कुणइ ॥ अविरयसम्मदिट्ठी । पभावगो सावगो सोवि ॥ १ ॥

तथाविरतसम्यग्दृष्टिगुणस्थानस्थो जीवस्तीर्थकृदायुर्द्विकस्य बंधात् सप्तसप्ततेर्बंधकः, तथा मिश्रोदयव्यवच्छेदादानुपूर्वीचतुष्कसम्यक्त्वोदयाच्च चतुरुत्तरशतस्य वेदयिता अष्टत्रिंशदधिकशतसत्ताको भवति. उपशमकस्तु चतुर्थाद्येकादशांतं सर्वत्राष्टाचत्वारिंशदधिकशतसत्ताको लभ्यते, क्षपकस्य तु सत्तांप्रति गुणस्थानं दर्शयिष्यते ॥ २१ ॥ इत्यविरतसम्यग्दृष्टिगुणस्थानं चतुर्थं ॥ अथ पंचमगुणस्थानस्वरूपमाह—

प्रत्याख्यानोदयाद्देश—विरतिर्यत्र जायते ॥ तच्छ्राद्धत्वं हि देशोन—पूर्वकोटिगुरुस्थिति ॥

॥ २४ ॥ व्याख्या—जीवस्य सम्यक्तत्वावबोधजनितवैराग्योपचयात्सर्वविरतिवांछां कुर्वतोऽपि सर्वविरतिघातकप्रत्याख्यानाख्यकषायाणामुदयात्सर्वविरतिप्रतिपत्तिशक्तिर्न समुत्पद्यते, किंतु जघन्यमध्यमोत्कृष्टरूपा देशविरतिरेव जायते. तत्र जघन्याविरतिराकुट्टिस्थूलहिंसादित्यागान्मद्यमांसादित्यागान्मद्यमांसादिपरिहारात्परमेष्ठिनमस्कृतिस्मृतिनियममात्रधारणात, यदाह—

आउट्टिथूलहिंसाइ–मज्जमंसाइचाइउ ॥ जहन्नो सावउ होइ । जो नमुक्कारधारउ ॥ १ ॥

तथा मध्यमाविरतिरक्षुद्रादिभिर्न्यायसंपन्नविभव इत्यादिभिर्वा धर्मयोग्यतागुणैराकीर्णस्य गृहस्थोचितषट्कर्मनिरतस्य द्वादशव्रतपालकस्य सदाचारस्य भवति. यदाह—धम्मजुग्गगुणाइन्नो । छकम्मोवारसव्वउ ॥ गिहत्थो य सयायारो । सावउ होइ मझिमो ॥ १ ॥ 

तथोत्कृष्टा विरतिः सच्चित्ताहारवर्जकस्य सदैव कृतैकभक्तस्यानिंद्यब्रह्मव्रतपालकस्य महाव्रतांगीकारस्पृहयालुतया त्यक्तगृहद्वंद्वस्य श्रमणोपासकस्य भवति. यदाह—

उक्कोसेणं तु सढ्ढोउ । सच्चित्ताहारवज्जउ ॥ एगासणगभोईअ । बंभयारी तहेव य ॥१॥

इत्येवंविधा त्रिविधापि देशविरतिरेव यत्र ज्ञवति हि स्फुटं तत् श्राद्धत्वं श्रावकत्वं स्यात्. तत्कथंज्नूतं? देशोना पूर्वकोटिर्गुर्वी स्थितिर्यत्र तत् देशोनपूर्वकोटिगुरुस्थिति. यज्नाष्यं—गावलिअ सासायण । समहिअतित्तीससागरचजङ्घं ॥ देसूणपुव्वकोडी । पंचमगं तेरसंव पुढो ॥१॥

॥ २४ ॥ अथ देशविरतौ ध्यानसंज्नवमाह—

आर्त्तं रौद्रं ज्नवेदत्र । मंदं धर्म्यं तु मध्यमं ॥ षट्कर्मप्रतिमाश्राद्ध–व्रतपालनसंज्नवं ॥

॥ १ ॥ व्याख्या—अत्र देशविरतिगुणस्थानके अनिष्टयोगार्त्तं, इष्टवियोगार्त्तं, रोगार्त्तं, निदानार्त्तमिति चतुःपादमार्त्तध्यानं. रौद्रध्यानं च हिंसानंदरौद्रं, मृषावादानंदरौद्रं, चौर्यानंदरौद्रं, संरक्षणानंदरौद्रं चेति चतुःपादं रौद्रध्यानं. तदार्त्तध्यानं रौद्रध्यानं च मंदं ज्नवति. कोऽर्थः? यथा यथा देशविरतिरधिकाधिकतरा च ज्नवति, तथा तथार्त्तरौद्रध्याने मंदे मंदतरे च स्यातां. तु पुनर्धर्मध्यानं यथा यथा देशविरतिरधिकाधिका स्यात्तथा तथा मध्यमं यावदधिकाधिकं ज्नवति, नतूत्कृष्टं धर्मध्यानं परिणमति.

तदा ज्नावतः सर्वविरतिरेव संजायते. कथंज्नूतं धर्मध्यानं? षट्कर्मप्रतिमा श्राद्धव्रतपा-

लनसंभवं षट्कर्माणि देवपूजादीनि. यदुच्यते—देवपूजा गुरूपास्तिः । स्वाध्यायः संयमस्तपः ॥ दानं चेति गृहस्थानां । षट् कर्माणि दिने दिने ॥ १ ॥ प्रतिमा अभिग्रहविशेषा दर्शनप्रतिमाद्या एकादश. यदाह—दंसणवयसामाइअ–पोसहपडिमा अबंभसच्चित्ते ॥ आरंभपेसउद्दिट्ठ । वज्जए समणभूए अ ॥ १ ॥ श्राद्धव्रतान्यणुव्रतादीनि द्वादश. यदाह—पाणिवहमुसावाए । अदत्तमेहूणपरिग्गहे चेव ॥ दिसिभोगदंडसमईअ । देसे पोसह तह विभागे ॥ १ ॥ षट्कर्मादिविस्तारो ग्रंथांतरादवसेयः, तथैतेषां पालनात्संभवतीति षट्कर्मप्रतिमाश्राद्धव्रतपालनसंभवं धर्मध्यानं मध्यममिति. तथा देशविरतिगुणस्थानस्थो जीवोऽप्रत्याख्यानकनरत्रिकाद्यसंहननौदारिकरूपप्रकृतिदशकबंधव्यवच्छेदात्सप्तषष्टेर्बंधकः, तथा प्रत्याख्यानकनरतिर्यगानुपूर्वीद्वयनरकत्रिकदेवत्रिकवैक्रियद्वयदुर्भगानादेयायशोरूपसप्तदशप्रकृतीनामुदयव्यवच्छेदात्सप्ताशीतेर्वेदयिता अष्टत्रिंशदधिकशतसत्ताको भवति ॥ २५ ॥ इति. देशविरतिगुणस्थानकं पंचमं ॥ अथातः परं सप्तगुणस्थानानां समानामेव स्थितिमाह—

अतः परं प्रमत्तादि–कसप्तगुणस्थानके ॥ अंतर्मुहूर्त्तमेकैकं । प्रत्येकं गदिता स्थितिः ॥

॥ २६ ॥ व्याख्या—अतःपरं देशविरतिगुणस्थानादनंतरं प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशांतमोहाख्यसप्तगुणस्थानानां प्रत्येकमेकैकमंतर्मुहूर्त्तं गुरुस्थितिर्गदिता प्रोक्तेति. ॥ २६ ॥ अथ प्रमत्तसंयतगुणस्थानकस्वरूपमाह—

कषायाणां चतुर्थानां । व्रती तीव्रोदये सति ॥ भवेत्प्रमादयुक्तत्वा–त्प्रमादस्थानगो मुनिः ॥ २७ ॥ व्याख्या—मुनिः सर्वविरतिः साधुः प्रमत्तस्थानगो भवेत्, प्रमत्ताख्यस्थानकस्थो भवति. कथंभूतो मुनिः? व्रती वतान्यहिंसादीनि महाव्रतानि विद्यंते यस्यासौ व्रती. कस्मात्प्रमत्तः? प्रमादयुक्तत्वात्. तत्र प्रमादाः पंच. यदाह—मज्जं विसयकसाया । निद्दा विगहा य पंचमी भणिया ॥ एए पंचपमाया । जीवं पाडंति संसारे ॥१॥ इत्येतैः प्रमादयुक्तत्वात्. क्व सति? चतुर्थानां कषायाणां संज्वलनाख्यकषायाणां तीव्रोदये सति. अयमर्थः—यदा मुनेर्महाव्रतिनोऽपि संज्वलनकषायस्तीव्रो भवति, तदा प्रमत्तगुणस्थानादधस्तात्पतति. यदा त्वंतर्मुहूर्त्तादूर्ध्वमपि प्रमादरहितो भवति, तदा पुनरपि प्रमत्तगुणस्थानमारोहतीति. ॥ २७ ॥ अथ प्रमत्तसंयतगुणस्थाने ध्यानसंभवमाह—

अस्तित्वान्नोकषायाणा–मत्रार्त्तस्यैव मुख्यता ॥ आज्ञाद्यालंबनोपेत–धर्मध्यानस्य गौणता ॥ २८ ॥ व्याख्या—अत्र प्रमत्तगुणस्थानके मुख्यता मुख्यत्वमार्त्तस्य ध्यानस्यैवोपलक्षणत्वाद्रौद्रस्यापि. कस्मात्? नोकषायाणां हास्यषट्कादीनामस्तित्वाद्विद्यमानत्वात्. तथा आज्ञाद्यालंबनोपेतधर्मध्यानस्य गौणता, आज्ञादीन्याज्ञापायविपाकसंस्थानविचयलक्षणान्यालंबनानि आज्ञाद्यालंबनानि, तैरुपेतं च तद्धर्मध्यानं चाज्ञाद्यालंबनोपेतधर्मध्यानं, तस्य. अत्र धर्मध्यानमपि चतुःपादं यथा—आज्ञापायविपाकानां। संस्थानस्य च चिंतनात् ॥ इत्थं वा ध्येयभेदेन। धर्मध्यानं चतुर्विधं ॥ १ ॥ आज्ञां यत्र पुरस्कृत्य। सर्वज्ञानामबाधितां ॥ तत्वतश्चिंतयेदर्थान्। तदाज्ञाध्यानमुच्यते ॥ २ ॥ रागद्वेषकषायाद्यै–र्जायमानान् विचिंतयेत् ॥ यत्रापायांस्तदपाय–विचयध्यानमुच्यते ॥ ३ ॥ प्रतिक्षणं समुद्भूतो। यत्र कर्मफलोदयः ॥ चिंत्यते चित्ररूपः स। विपाकविचयो मतः ॥ ४ ॥ अनाद्यंतस्य लोकस्य। स्थित्युत्पादव्ययात्मनः ॥ आकृतिं चिंतयेद्यत्र। संस्थानविचयः स तु ॥ ५ ॥ इत्याद्यालंबनोपेतधर्मध्यानस्य गौणता, अत्र सप्रमादत्वादुच्यत इति ॥ २८ ॥

यावत्प्रमादसंयुक्त–स्तावत्तस्य न तिष्टति ॥ धर्मध्यानं निरालंब–मित्यूचुर्जिनभास्कराः ॥२ए॥ व्याख्या–जिनभास्करा जिनसूर्या इत्यूचुरित्येतदेव कथयंतिस्म. किं तदित्याह–यः साधुर्यावत्प्रमादसंयुक्तो भवति, तावत्तस्य साधोर्गोचरे निरालंबं ध्यानं न तिष्टतीति निश्चयः. यतोऽत्र प्रमत्तगुणस्थाने मध्यमधर्मध्यानस्यापि गौणतैवोक्ता, न तु मुख्यता; ततोऽत्र निरालंबनोत्कृष्टधर्मध्यानस्यासंभव एव. ॥ २ए ॥ अथ योऽमुमेवार्थं न मन्यते तंप्रत्याह—

प्रमाद्यावश्यकत्यागा–न्निश्चलं ध्यानमाश्रयेत् ॥ योऽसौ नैवागमं जैनं । वेत्ति मिथ्यात्वमोहितः ॥ ३० ॥ व्याख्या —यः साधुः प्रमादी प्रमादयुक्तोऽप्यावश्यकं, त्यागात्सामायिकादिषडावश्यकसाधकानुष्टानपरिहारान्निश्चलं निरालंबं ध्यानमाश्रयेत्, असौ साधुर्मिथ्यात्वमोहितो मिथ्याभावमूढः सन् जैनागमं श्रीसर्वज्ञप्रणीतसूत्रं नैव वेत्तीति. यतोऽसौ व्यवहारं न करोति, निश्चयं नाप्नोति. जिनागमविद्भिस्तु व्यवहारपूर्वक एव निश्चयः साध्यः. यदागमः —जइ जिणमयं पव जहा । तामाववहारनिछएसुअह ॥ ववहारनउछेए । निच्छुछेत्त जउ भणिउ ॥ १ ॥ दृष्टांतश्चात्र—कश्चित्पुरुषः स्वस्मिन् गृहे सदैव कदन्नमात्रमास्वादयन् केना-

पि निमंत्रितस्तस्य गृहे भुक्त्वाऽपूर्वमिष्टान्नाहारं भुक्तवान्, ततोऽसौ तदास्वादरसलोलुपतया स्वगृहे कदन्नादिकमभुंजन् मिष्टानं चाऽप्राप्नुवन्नुन्नयाऽन्नावतया सीदति.

तथायमपि कदाग्रहगृहीतो जीवः प्रमत्तगुणस्थानसाध्यस्थूलमात्रपुण्यपुष्टिकारणं षडावश्यकादिकष्टक्रियाकर्म कुर्वाणः कदाचिदप्रमत्तगुणस्थानगतः षडावश्यकादिकष्टक्रियाकर्म कदन्नकल्पं मन्वानो न सम्यक् साधयति, मिष्टाहारकल्पं निरालंबं ध्यानं तु प्रथमसंहननाद्यन्नावान्नित्यं नाप्नोति. ततः षडावश्यकमकुर्वन् निरालंबध्यानमप्राप्नुवंश्च स कदाचिद्ग्रहगृहीतो जीवोऽप्युन्नयभ्रष्टतया ध्रुवं सीदति. तथा चाग्रेतनैर्विद्भिः परमसंवेगगिरिशिखरमारूढैर्निरालंबध्यानसाधनमनोरथा एव कृताः श्रूयंते. तथा च पूर्वमहर्षयः—चेतोवृत्तिनिरोधनेन करणग्रामं विधायोद्वसं । तत्संहृत्य गतागतं च मरुतो धैर्यं समाश्रित्य च ॥ पर्यंके तमयाशिवाय विधिवच्छून्यैकन्नून्नृदरी—मध्यस्थेन कदाचिदर्पितदृशा स्थातव्यमंतर्मुखं ॥ १ ॥ चित्ते निश्चलतां गते प्रशमिते रागाद्यवियोमदे । विद्राणेऽक्षकुटुंबके विघटिते ध्वांते भ्रमारंभके ॥ आनंदे प्रविजृंभिते पुरपते ज्ञाने समुन्मीलिते । मां द्रक्ष्यंति कदा वनस्थमभितः शस्ताशयाः

श्वापदाः ॥ २ ॥ तथा श्रीसूरप्रभाचार्याः—वदावदातैर्भवदागमानां । वाग्भेषजैरागरुजं नि-
वर्त्त्य ॥ मया कदा प्रौढसमाधिलक्ष्मी—र्निर्वर्त्यते निर्वृतिनिर्विपक्षा ॥ १ ॥ रागादिद्रव्याणि
मुहुर्लिहाने । ध्यानानले साक्षिणि केवलश्रीः ॥ कलत्रतामेष्यति मे कदैषा । वपुर्व्यपायेऽप्य-
नुयायिनी या ॥ २ ॥ तथा श्रीहेमचंद्रसूरयः—वने पद्मासनासीनं । क्रोडस्थितमृगार्भकं ॥
कदा घ्रास्यंति वक्त्रे मां । जरंतो मृगयूथपाः ॥ १ ॥ शत्रौ मित्रे तृणे स्त्रैणे । स्वर्णेऽश्मनि
मणौ मृदि ॥ मोक्षे भवे भविष्यामि । निर्विशेषमतिः कदा ॥ २ ॥ तथा मंत्री वस्तुपालः—
संसारव्यवहारतोऽरतमतिर्व्यावर्त्तकर्त्तव्यता—वार्त्तामप्यपहाय चिन्मयतया त्रैलोक्यमा-
लोकयन् ॥ श्रीशत्रुंजयशैलगह्वरगुहामध्ये निबद्धस्थितिः । श्रीनाभेय कदा लभेऽघगलितं ध्या-
यातिमानं मनः ॥ १ ॥ स्वामिन् रैवतकाद्रिसुंदरदरीकोणप्रणीतामनः । प्रत्याहारमनोहरं मु-
कुलयन् कल्लोललोलं मनः ॥ त्वां चंद्रांशुमरीचिमंडलरुचिं साक्षादिवालोकयन् । संपद्येय क-
दा चिदात्मकपरानंदोर्मिसंवर्मितं ॥ २ ॥ तथा परसमयेऽपि भर्तृहरिः—गंगातीरे हिमवति
शिलाबद्धपर्यासनस्य । ब्रह्मज्ञानाभ्यसनविधिना योगनिद्रां गतस्य ॥ किं तैर्भाव्यं मम सुदि-

वसैर्यत्र ते निर्विशंकाः । संप्राप्यंते जरठहरिणाः शृंगकंडूविनोदं ॥ १ ॥ वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः । स्मरंतः संसारे विगुणपरिणामावधिगतिं ॥ कदा पुण्येऽरण्ये परिणतशरच्चंद्रकिरणां । त्रियामां नेष्यामो गुरुगदिततत्त्वैकशरणाः ॥ २ ॥

तदेवं स्वसमयपरसमयप्रसिद्धैः पूर्वपुरुषैः परात्मतत्त्वसंवित्तिमनोरथा एव कृताः. मनोरथाश्च लोके दुःप्राप्यवस्तुन एव क्रियंते, न तु सुप्राप्यस्य. न खलु कोऽपि सदैव मिष्टान्नाहारं भुंजन् मिष्टाहारमनोरथान् कुरुते. न च कश्चित्प्राज्यं साम्राज्यमनुभवन्नपि कदाहं राजा भविष्यामीति चिंतयति. तस्मात्सर्वप्रकारेण प्रमत्तांतगुणस्थानस्थैर्विवेकिभिः परमसंवेगारूढैः प्राप्तप्रौढाप्रमत्तगुणस्थानस्य वशतोऽपि शुद्धपरमात्मतत्त्वसंवित्तिमनोरथाः कार्याः. न तु षडूकर्मषम्नावश्यकादिव्यवहारक्रियाकर्मपरिहारः कार्यः. यतः—योगिनः समतामेतां । प्राप्य कल्पलतामिव ॥ सदाचारमयीमस्यां । वृत्तिमातन्वतां बहिः ॥ १ ॥ ये तु योगग्रहग्रस्ताः । सदाचारपराङ्मुखाः ॥ एष तेषां न योगोऽपि । न लोकोऽपि जडात्मनां ॥ २ ॥ इति ॥ ३० ॥ तस्माद्यत्करणीयं तदाह—

तस्मादावश्यकैः कुर्यात् । प्राप्तदोषनिकृंतनं ॥ यावन्नाप्नोति सद्ध्यान–मप्रमत्तसमाश्रितं ॥ ३१ ॥ व्याख्या—तस्मात्पूर्वोक्तहेतुकारणात्साधुस्तावत्प्राप्तदोषनिकृंतनं दैवसिकाद्यासेवितातिचारछेदनमावश्यकैः सामायिकादिन्निरेव कुर्यात्करोतु, यावदप्रमत्तगुणाश्रितप्रथमगुणस्थानसाध्यं सद्ध्यानं निरालंबध्यानं नाप्नोति नासादयतीत्यर्थः. तथा प्रमत्तस्थानस्थो जीवः प्रत्याख्यानकबंधव्यवछेदात्रिःषष्टेर्बंधकः, तथा तिर्यग्गतितिर्यगायुर्नीचैर्गोत्रोद्योतप्रत्याख्यानकरूपाष्टप्रत्युदयव्यवछेदाहारकद्वयोदयाच्चैकाशीतेर्वेदयिता अष्टत्रिंशदधिकशतसत्ताको न्नवति ॥ ३१ ॥ इति प्रमत्तगुणस्थानकं षष्टं ॥ अथाप्रमत्तगुणस्थानमाह—

चतुर्थानां कषायाणां । जाते मंदोदये सति ॥ न्नवेत्प्रमादहीनत्वा–दप्रमत्तो महाव्रती ॥ ॥ ३२ ॥ व्याख्या—महाव्रतानि विद्यंते यस्यासौ महाव्रती साधुरप्रमत्तोऽप्रमत्तगुणस्थानस्थो न्नवति. कस्मात्? प्रमादहीनत्वात्, पूर्वोक्तपंचप्रकारप्रमादरहितत्वात्. क सति? मंदोदये जाते सति, मंदोऽतीव्रविपाक उदयोऽस्तित्वमात्रलक्षणो यत्रासौ मंदोदयस्तस्मिन्मंदोदये. केषां? चतुर्थानां कषायाणां संज्वलनान्निधानक्रोधादीनामुपलक्षणत्वान्नोकषायाणां च. अयम-

र्थः—संज्वलनकषायाणां नोकषायाणां च यथायथा मंदोदयो भवति, तथा तथा साधुरप्रमत्तो भवति. यदाह—यथा यथा न रोचंते । विषयाः सुलभा अपि ॥ तथा तथा समायाति । संवित्तौ तत्वमुत्तमं ॥ १ ॥ यथा यथा समायाति । संवित्तौ तत्वमुत्तमं ॥ तथा तथा न रोचंते । विषयाः सुलभा अपि ॥ २ ॥ ३२ ॥ अथ यथाऽप्रमत्तस्य एव मोहनीयकर्मोपशमलक्षणनिपुणः सद्ध्यानारंभकत्वं कुरुते तथा श्लोकद्वयेनाह—

नष्टाशेषप्रमादात्मा । व्रतशीलगुणान्वितः ॥ ज्ञानध्यानधनो मौनी । शमनक्षपणोन्मुखः ॥ ३३ ॥ सप्तकोत्तरमोहस्य । प्रशमाय क्षयाय च ॥ सद्ध्यानसाधनारंभं । कुरुते मुनिपुंगवः ॥ ३४ ॥ व्याख्या—नष्टाशेषप्रमादो निर्घाटिताखिलप्रमाद आत्मा जीवो यस्यासौ नष्टाशेषप्रमादात्मा, व्रतानि महाव्रतादीनि, शीलगुणा अष्टादशसहस्रशीलांगलक्षणास्तैरन्वितः संयुक्तो व्रतशीलगुणान्वितः. ज्ञानं सदागमाभ्यासलक्षणं, ध्यानमेकाग्रतारूपं तद् ज्ञानं च ध्यानं च धनं सर्वस्वं यस्यासौ ज्ञानध्यानधनः, अत एव मौनी मौनवान्, यतो मौनवानेव ध्यानधनः स्यात्, यदाह—

तत्र मनोगृहीताखिल–कालत्रयगतजगत्त्रयव्याप्तिः ॥ यत्रास्तमेति सहसा । सकलोऽपि हि वाक्परिस्पंदः ॥ १ ॥ ततो ज्ञानध्यानतो मौनी शमनाय शमनार्थं, क्षपणाय क्षपणार्थं वा उन्मुखः सन्मुखः कृतोद्यम इत्यर्थः, शमनक्षपणोन्मुखः. एवंविधो मुनिपुंगवः, सप्तकोत्तरमोहस्य पूर्वोक्तसप्तकातिरिक्तैकविंशतिप्रकृतिरूपस्य मोहनीयस्य शमनोन्मुखः प्रशमाय क्षणोन्मुखः, क्षयाय वा सद्ध्यानसाधनारंभं निरालंबं ध्यानप्रवेशप्रारंभं कुरुते. निरालंबे ध्यानप्रवेशे हि योगिनस्त्रिविधा भवंति–यथाप्रारंभकाः, तन्निष्ठाः, निष्पन्नयोगाश्च यदाह—

सम्यग्नैसर्गिकीं वा विरतिपरिणतिं प्राप्य सांसर्गिकीं वा । क्वाप्येकांते निविष्टाः कपिचपलचलन्मानसस्तंभनाय ॥ शश्वन्नासाग्रपालीघनघटितदृशो धीरवीरासनस्था । ये निष्कंपाः समाधेर्विदधति विधिनारंभमारंभकास्ते ॥ १ ॥ कुर्वाणो मरुदासनेंद्रियमनःक्षुत्तर्षनिद्राजयं । योऽतिजल्पनिरूपणाभिरसकृत्तत्त्वं समभ्यस्यति ॥ सत्वानामुपरि प्रमोदकरुणामैत्रीं भृशं मन्यते । ध्यानाधिष्ठितचेष्टयाभ्युदयते तस्येह तन्निष्ठता ॥ २ ॥ उपरतबहिरंतर्जल्पकल्लोलमाले । नसदविकलविद्यापद्मिनीपूर्णमध्ये ॥ सततममृतमंतर्मानसे यस्य हंसः । पिब-

ति निरुपलेपः स्यात्तु निष्पन्नयोगी ॥ १ ॥ ३४ ॥ अथाप्रमत्तगुणस्थाने ध्यानसंभवमाह—

धर्मध्यानं भवत्यत्र । मुख्यवृत्त्या जिनोदितं ॥ रूपातीततया शुक्ल–मपि स्यादंशमात्रतः ॥ ३५ ॥ व्याख्या—जिनोदितं जिनप्रणीतं धर्मध्यानं मैत्र्यादिभेदभिन्नमनेकविधं. यदाह—मैत्र्यादिभिश्चतुर्भेदं । यद्वाज्ञादिचतुर्विधं ॥ पिंडस्थादि चतुर्धा वा । धर्मध्यानं प्रकीर्त्तितं ॥ १ ॥ तत्र—मैत्रीप्रमोदकारुण्य–माध्यस्थ्यानि नियोजयेत् ॥ धर्मध्यानमुपस्कर्त्तुं । तद्धि तस्य रसायनं ॥ २ ॥ आज्ञापायविपाकानां । संस्थानस्य च चिंतनात् ॥ इत्थं वा ध्येयभेदेन । धर्मध्यानं प्रकीर्त्तितं ॥ ४ ॥ इति पूर्वमेव प्रदर्शितं. स्यात्पिंडस्थं ध्यानमात्मांगसंगि । स्वांतं स्वांतव्यापरूपं पदस्थं ॥ रूपस्थं संकल्पितात्मस्वरूपं । रूपातीतं कल्पनामुक्तमेव ॥ ॥ १ ॥ तदेवंविधं जिनोदितं धर्मध्यानमत्राप्रमत्तगुणस्थाने मुख्यवृत्त्या प्रधानतया भवति. तथारूपातीततया कृत्वा शुक्लमपि शुक्लध्यानमप्यंशमात्रतोऽत्र गौणतया स्यादेवेति ॥ ३५ ॥

अथावश्यकानामभावेऽपि शुद्धिमाह—

इत्येतस्मिन् गुणस्थाने । नो संत्यावश्यकानि षट् ॥ संततध्यानसद्योगा–च्छुद्धिः स्वा-

भाविकी यतः ॥ ३६ ॥ व्याख्या—इतीति पूर्वोक्तस्वरूपे एतस्मिन्नप्रमत्तगुणस्थाने आवश्यकानि सामायिकादीनि षडपि नो संति, न विद्यंते. कोऽर्थः ? सामायिकादीनां षसामप्यावश्यकानां व्यवहारक्रियारूपाणामत्र गुणस्थाने निवृत्तिः, न तु नैश्चयिकी सामायिकादीनां निवृत्तिः, तेषां ह्यात्मगुणत्वात्. ' आया सामाइए । आया सामाइअस्सयट्ठे ' इत्याद्यागमवचनादिति. कुतः कारणादावश्यकानि नो संति ? यतो यस्मात्कारणादत्र संततध्यानसद्योगान्निरंतरसद्ध्यानसद्भावात्स्वाभाविकी सहजजनितैव संकल्पविकल्पमालाऽभावादात्मैकस्वभावरूपा निर्मलता भवतीत्यत्र गुणस्थाने वर्त्तमानो जीवो भावतीर्थावगाहनात्परमां शुद्धिमाप्नोत्येव. यदाह—

दाहोवसमं तण्हाइ—छेअणं मलपवाहणं चेव ॥ तिहिं अत्थेहिं निउत्तं । तम्हा तं दव्वत्तु तित्थं ॥ १ ॥ कोहम्मि उ निग्गहिए । दाहस्सोवसमणं हवइ तित्थं ॥ लोहंमि उ निग्गहिए । तण्हाए छेअणं जाण ॥ २ ॥ अट्ठविहं कम्मरयं । बहुएहिं भवेहिं संचिअं जम्हा ॥ तवसंजमेण धोअइ । तम्हा तं भावउ तित्थं ॥ ३ ॥ अन्यच्च—रुद्धे प्राणप्रचारे वपुषि नियमि-

ते संवृतेऽक्षप्रपंचे । नेत्रस्पंदे निरस्ते प्रलयमुपगतेंतर्विकल्पेंद्रजाले ॥ भिन्ने मोहांधकारे प्रसरति महसि क्वापि विश्वप्रदीपे । धन्यो ध्यानावलंबी कलयति परमानंदसिंधौ प्रवेशं ॥ १ ॥ इति. तथाऽप्रमत्तगुणस्थानस्थो जीवः शोकारत्यस्थिराशुभायशोऽसातव्यवच्छेदादाहारकद्विकबंधाच्चैकोनषष्टेर्बंधको भवति.

तथा च यदि देवायुरपि न बध्यते, तदाष्टपंचाशतो बंधकः, तथा स्त्यानर्द्धित्रिकाहारकद्विकोदयव्यवच्छेदात् षट्सप्ततेर्वेदयिता, अष्टत्रिंशदधिकशतसत्ताको भवति ॥ ३६ ॥ इत्यप्रमत्तगुणस्थानकं समाप्तं ॥ अथापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशांतमोहक्षीणमोहाख्यानां पंचानामपि गुणस्थानानां नामार्थं प्रथमं सामान्येन श्लोकद्वयेनाह—

अपूर्वात्मगुणाप्तित्वा—दपूर्वकरणं मतं ॥ भावानामनिवृत्तित्वा—दनिवृत्तिगुणास्पदं ॥३७॥ अस्तित्वात्सूक्ष्मलोभस्य । भवेत्सूक्ष्मकषायकं ॥ शमनाच्छांतमोहं स्यात् । क्षपणात्क्षीणमोहकं ॥ ३८ ॥ व्याख्या—य एवाप्रमत्तसंयतः सप्तमगुणस्थानवर्ती दर्शितः, स एव संज्वलनकषायाणां नोकषायाणां वाऽत्यंतं मंदोदये सति प्राप्तापूर्वपरमाह्लादैकमयं करणं परिणाम-

रूपं यत्र तदपूर्वकरणं नाम गुणस्थानमष्टमं मतं. कस्मात्, ? अपूर्वात्मगुणाप्तित्वात्. अपूर्वाणा मात्मगुणानामाप्तिः संप्राप्तिस्तस्या भावोऽपूर्वात्मगुणाप्तित्वं तस्मात्.

तथा दृष्टश्रुतानुभूतभोगाकांक्षादिलंकल्पपरहितनिश्चलपरमात्मैकतत्वैकाग्रध्यानपरिणतिरूपाणां भावानामनिवृत्तिगुणास्पदं गुणस्थानं भवति तच्चानिवृत्तिबादरं यदुच्यते तदत्र बादराणां कषायाणामप्रत्याख्यानादिद्वादशानां नवानां नोकषायाणां च शमकः क्षपणाय प्रगुणो भवतीत्यतः कारणादनिवृत्तिबादरमित्युच्यते, तन्नवमं गुणस्थानं. तथा सूक्ष्मपरमात्मतत्वभावनाबलेन विंशतिप्रकृतिरूपे मोहे शांते क्षीणे वा सूक्ष्मखंडीभूतस्य लोभस्यैकस्यास्तित्वं यत्र तत्सूक्ष्मकषायकं सूक्ष्मसंपरायनामकं दशमं गुणस्थानं भवति. क्षपकस्यैव क्षपकश्रेणिमार्गेण दशमगुणस्थानादेव निःकषायशुद्धात्मभावनाबलेन सकलमोहस्य क्षपणात्क्षीणमोहं द्वादशं गुणस्थानं भवति. इति सामान्यार्थः ॥ १७ ॥ ३८ ॥ अथापूर्वकरणाद्यंशादेव श्रेणिद्वयारोहमाह—

तत्रापूर्वगुणस्थाना—द्यंशादेवाधिरोहति ॥ शमको हि शमश्रेणिं । क्षपकः क्षपकावलीं

॥ ३९ ॥ व्याख्या—तत्र तस्मिन्नपूर्वगुणस्थानावरोहसमयेऽपूर्वकरणस्यैवाद्यांशादेव शमकः शमश्रेणिमारोहति, क्षपकः क्षपकावर्ती क्षपकश्रेणिमधिरोहति ॥ ३९ ॥ अथ प्रथममुपशमश्रेण्यारोहयोग्यतामाह—

पूर्वज्ञः शुद्धिमान् युक्तो । ह्याद्यैः संहननैस्त्रिभिः ॥ संध्यायन्नाद्यशुक्लांशं । स्वां श्रेणीं शमकः श्रयेत् ॥ ४० ॥ व्याख्या—अत्रोपशमको मुनिराद्यं शुक्लांशं शुक्लध्यानस्य प्रथमं पादं वक्ष्यमाणलक्षणं संध्यायन् स्वां श्रेणीमुपशमश्रेणीं शमकः श्रयेत् प्रतिपद्येत, कथंभूतः? पूर्वज्ञः पूर्वगतश्रुतधरः, शुद्धिमान् निरतिचारचारित्रः, आद्यैस्त्रिभिः संहननैर्वज्रऋषभनाराचऋषभनाराचनाराचलक्षणैर्युक्तः, एवंविधो मुनिरुपशमश्रेणीं श्रयेदिति ॥ ४० ॥ अथोपशमश्रेण्यारूढस्याऽल्पायुषो गतिं दीर्घायुषः कृत्यं चाह—

श्रेण्यारूढः कृते काले—ऽहमिंद्रेष्वेव गच्छति ॥ पुष्टायुस्तूपशांतांतं । नयेच्चारित्रमोहनं ॥ ४१ ॥ व्याख्या—यो मुनिरल्पायुरुपशमश्रेणिमारोहति, स श्रेण्यारूढः काले आयुस्त्रुटिलक्षणे कृते सति अहमिंद्रेष्वेव सर्वार्थसिद्धादिदेवेष्वेव प्रयाति, परं यः प्रथमसंहननो भवति,

अपरसंहननानामनुत्तरेषु गमनाऽसंभवात्, यदाह—छेवठेण उगमइ। चउरो जा कप्पकीलि-आईसु ॥ चउसु दुदु कप्पवुड्ढी । पढमेणं जाव सिद्धावि ॥ १ ॥ तथा यः सप्तलवाधिकायुष्को मुक्तियोग्यश्च भवति, स एव सर्वार्थसिद्धौ याति. यदाह—सव्वट्ठसिद्धिनामे । उक्कोसठिईसु विजयमाईसु ॥ एगावसेसगब्भा । हवंति लवसत्तमा देवा ॥ २ ॥ आह—

ननु उपशमश्रेणिकः कथं मुक्तियोग्यः स्यात् ? उच्यते—सप्त लवा मुहूर्त्तस्यैकादशभागरूपा भवंति. ' लवसत्तहत्तरीए । होइ मुहुत्तो ' इति वचनात्. ततो लवसप्तकावशेषायुरेवोपशमकः खंडश्रेणिक एव पराङ्मुखो वलति, सप्तमं गुणस्थानमागत्य पुनः क्षपकश्रेणिमारुह्य सप्तलवांतरे च क्षीणमोहांतं गत्वांतकृत्केवली भूत्वा मुक्तिं गच्छतीत्यदोषः. तथा यस्तु पुष्टायुरुपशमश्रेणीं प्रतिपद्यते, स चाखंडश्रेणिकश्चारित्रमोहनं चारित्रमोहनीयं कर्म उपशांततमेकादशगुणस्थानप्राप्तं नयेदुपशमं प्रापयेदिति. ॥ ४१ ॥ अथौपशमिक एवापूर्वादिगुणस्थानकेषु यत्करोति तदाह—

अपूर्वादिद्वयैकैक–गुणेषु शमकः क्रमात् ॥ करोति विंशतेः शांतिं । लोभाणुत्वं च त-

॥ ३६ ॥

भमं ॥ ४२ ॥ व्याख्या—शमकः सप्तकोत्तरमोहस्य संज्वलनलोभवर्जप्रकृतिविंशतेरपूर्वानिवृत्तिलक्षणे गुणस्थानद्वये शांतिं शमनं करोति. ततः क्रमेण सूक्ष्मसंपरायगुणस्थाने संज्वलनलोभस्य सूक्ष्मत्वं करोति. ततः क्रमेणोपशांतमोहगुणस्थानके तच्छमं तस्य सूक्ष्मलोभस्य शमं सर्वथोपशमं करोति. तथात्रोपशांते मोहगुणस्थाने जीव एकप्रकृतेर्बंधक एकोनषष्टिप्रकृतिवेदयिता, अष्टचत्वारिंशदधिकशतसत्ताको भवति ॥ ४२ ॥ अथोपशांतमोहगुणस्थाने यादृशं सम्यक्त्वचारित्रभावलक्षणत्रयं भवति तदाह—

शांतदृग्वृत्तमोहत्वा–दत्रौपशमिकाभिधे ॥ स्यातां सम्यक्त्वचारित्रे । भावश्चोपशमात्मकः ॥ ४३ ॥ व्याख्या—अत्रोपशांतगुणस्थानके दर्शनचारित्रमोहनीयस्योपशमात् सम्यक्त्वचारित्रे औपशमिके एव भवतः. तथात्र भावोऽप्युपशमात्मकः, न तु क्षायिकक्षायोपशमिकौ भावाविति. ॥ ४३ ॥ अथोपशांतमोहाच्च्यवनमाह—

वृत्तमोहोदयं प्राप्यो–पशमी च्यवते ततः ॥ अधःकृतमलं तोयं । पुनर्मालिन्यमश्नुते ॥ ॥ ४४ ॥ व्याख्या—उपशमावृत्तमोहोदयं चारित्रमोहनीयोदयं प्राप्य तत उपशांतमोहाच्च्य-

॥ ३१ ॥

वते, पुनर्मोहप्रमादजनितप्रमादकालुष्ये पतति. युक्तोऽयमर्थः. यस्मात्कारणात्तोयं जलं अधःकृतमलं तलोपविष्टमलत्वादुपरि निर्मलमपि किमपि प्रेरणानिमित्तं प्राप्य पुनर्मालिन्यमश्नुते, मलिनभावं प्राप्नुयादिति. यदाह—सुअकेवलि आहारंग । उजुमई उवसंतगावि हु पमाया ॥ हिंडंति भवमणंतं । तयणंतरमेव चउगईआ ॥ ४४ ॥ अथोपशमकानां गुणस्थानकेष्वारोहावरोहावाह—

अपूर्वाद्यास्त्रयोऽप्यूर्ध्व—मेकं यांति शमोद्यताः ॥ चत्वारोऽपि च्युतावाद्यं । सप्तमं वांत्यदेहिनः ॥ ४५ ॥ व्याख्या—अपूर्वाद्यास्त्रयोऽपि शमोद्यतास्त्रयोऽप्युपशमका ऊर्ध्वमारोहमाश्रित्य एकमेव गुणस्थानं यांति. कोऽर्थः ? अपूर्वगुणस्थानादनिवृत्तिबादरं यांति, तद्वर्त्तिनः सूक्ष्मसंपरायं यांति, तद्वर्त्तिनश्चोपशांतमिति. तथाऽपूर्वाद्याश्चत्वारोऽप्युपशमकाश्च्युतौ च्यवनविषये आद्यं मिथ्यात्वगुणस्थानं यांति. वाथवांत्यदेहिनश्चरमशरीराः सप्तमगुणस्थानं यावद्यांति. ते च सप्तमात्पुनः क्षपकश्रेणिमारोहंति. परमेकवारं कृतोपशमा एव क्षपकत्वं कुर्वंति, न तु तत्रैव भवे द्विवेलं कृतोपशमाः यदाह—जीवो हु एगजम्मंमि । इक्कसिं उव-

सामगो ॥ खयंपि कुज्जा नो कुज्जा । दोवारे उवसामगो ॥ १ ॥ ४५ ॥ अथोपशमश्रेणीनां संनवसंख्यामाह—

आसंसारं चतुर्वार–मेव स्याछमनावली ॥ जीवस्यैकनवे वार–ध्वयं सा यदि जायते ॥ ॥ ४६ ॥ व्याख्या—शमनावली शमश्रेणी जीवस्य प्राणिन आसंसारं अनादिसांतं संसारं यावच्चतुर्वारं चतुष्टयमेव स्यात्. सा चोपशमश्रेणिर्जीवस्यैकनवे एकनवमध्ये यदि कदाचिज्जायते, तदा वारध्वयं, यदाह—उवसमसेणिचनक्कं । जायइ जीवस्स आनवं नूणं ॥ सा पुण दो एगनवे । खवगस्सेणी पुणो एगा ॥ १ ॥ उपशमश्रेणिस्थापना चेयं—अणदंसनपुंसिछी । वेअठक्कं च पुरिसवेयं च ॥ दो दो एगंतरिए । सरिसे सरिसं उवसमेइ ॥ १ ॥ ४६ ॥ इत्युपशमश्रेणिः, अथ क्षपकश्रेणिलक्षणमाह—

अतो वक्ष्ये समासेन । क्षपकश्रेणिलक्षणं ॥ योगी कर्मक्षयं कर्त्तुं । यामारुह्य प्रवर्त्तते ॥ ४७ ॥ व्याख्या—अतः परं समासेन संक्षेपेण तस्याः क्षपकश्रेणेर्लक्षणं वक्ष्ये, यां क्षपकश्रेणीं समारुह्य योगी क्षपको मुनिः कर्मक्षयं कर्त्तुं प्रवर्त्तते ॥ ४७ ॥ अथाष्टमगुणस्थानाद-

र्वाक् याः कर्मप्रकृतीः क्षपकः क्षपयति ताः श्लोकत्रयेणाह—

अनिबद्धायुषः प्रांत्य—देहिनो लघुकर्मणः ॥ असंयतगुणस्थाने । नरकायुः क्षयं व्रजेत् ॥ ॥ ४८ ॥ तिर्यगायुः क्षयं याति । गुणस्थाने तु पंचमे ॥ सप्तमे त्रिदशायुश्च । दृग्मोहस्यापि सप्तकं ॥ ४९ ॥ दशैताः प्रकृतीः साधुः । क्षयं नीत्वा विशुद्धधीः ॥ धर्मध्याने कृताभ्यास । प्राप्नोति स्थानमष्टमं ॥ ५० ॥ व्याख्या—प्रांत्यदेहिनश्चरमशरीरस्य अबद्धायुषोऽकृतायुर्बंधस्य लघुकर्मणोऽल्पकर्मणोऽल्पकर्मांशस्य क्षपकस्याऽसंयतगुणस्थाने चतुर्थे गुणालये नरकायुः क्षयं व्रजेत्, नरकयोग्यायुः क्षयं याति. तथा पंचमे गुणस्थाने तिर्यगायुः क्षयं याति. सप्तमे गुणस्थाने त्रिदशायुर्देवायुरपि क्षयं याति. तथा तत्र सप्तमे गुणस्थाने दृग्मोहस्य सप्तकमपि क्षयं याति. ततः क्षपकः साधुरष्टाचत्वारिंशदधिकशतकर्मप्रकृतिमध्यादेता दश प्रकृतीः क्षयं नीत्वाऽष्टत्रिंशदधिकशतप्रकृतिसत्ताकोऽष्टमं स्थानं प्राप्नोति लभते. कथंभूतः? धर्मध्याने कृताभ्यासः, उत्कृष्टे धर्मध्याने रूपातीतलक्षणे कृतोऽभ्यासो येन स तथा.

अभ्यासः पुनः पुनरासेवनं, तेनैवाभ्यासयोगेन तत्वप्राप्तिः स्यात्. यदाह—अभ्यासेन जि-

॥ ४० ॥

तादृशो-ऽभ्यासेनैव जितासनः ॥ अभ्यासेन जितश्वासो-ऽभ्यासेनैवानिलत्रुटिः ॥ १ ॥ अभ्यासेन स्थिरं चित्त-मभ्यासेन जितेंद्रियः ॥ अभ्यासेन परानंदो-ऽभ्यासेनैवात्मदर्शनं ॥२॥ अभ्यासवर्जितैर्ध्यानैः । शास्त्रस्थैः फलमस्ति न ॥ भवेन्न हि फलैस्तृप्तिः । पानीयप्रतिबिंबितैः ॥३॥ ततो भावादेव विशुद्धधीर्निर्मलतत्वानुयायिबुद्धिरिति ॥ ४८ ॥ ४९ ॥ ५० ॥ अथात्राष्टमे गुणस्थाने क्षपकस्य शुक्लध्यानारंभमाह—

तत्राष्टमे गुणस्थाने । शुक्लसद्ध्यानमादिमं ॥ ध्यानं प्रक्रमते साधु-राद्यसंहननान्वितः ॥ ५१ ॥ व्याख्या—क्षपकः साधुस्तत्राष्टमे गुणस्थाने शुक्लसद्ध्यानं शुक्लनामकं प्रधानं ध्यानं, आद्यं प्रथमं पृथक्त्ववितर्कविचारलक्षणं वक्ष्यमाणं ध्यातुं प्रक्रमते. कथंभूतः साधुः? आद्यसंहननान्वितो वज्रर्षभनाराचनामकप्रथमसंहननयुक्त इति. ॥ ५१ ॥ अथ ध्यातुरेव स्वरूपं श्लोकद्वयेनाह—

निःप्रकंपं विधायाथ । दृढं पर्यंकमासनं ॥ नासाग्रदत्तसन्नेत्रः । किंचिदुन्मीलितेक्षणः ॥ ॥ ५२ ॥ विकल्पवागुराजाला-द्दूरोत्सारितमानसः ॥ संसारोच्छेदनोत्साहो । योगींद्रो ध्यातु-

मर्हति ॥ ५३ ॥ व्याख्या—ध्यातुमर्हतीति ध्यानारंजयोग्योऽन्नवतीति संबंधः. किं कृत्वा ? पर्यंकासनं दृढं निबिडबंधं विधाय; कथंन्नूतं? निःप्रकंपं निश्चलं. यत आसनजय एव ध्यानस्य प्रथमः प्राणः. यदाह—आहारासणनिद्दा–जयं च काऊण जिणवरमएण ॥ झाइज्जइ निअअप्पा । न्नवइठ्ठं जिणवरिंदेण ॥ १ ॥

केश्चित्सिद्धासनमित्युच्यते. यथा—योनिं वामपदापरेण निबिडं संपीड्य शिश्नं हनु । न्यस्योरस्यचलेंद्रियः स्थिरमना लोलां च ताल्वंतरे ॥ वंशस्थैर्यतयान्निनिश्चलदृशा पश्यन् भ्रुवोरंतरं । योगी योगविधिप्रसाधनकृते सिद्धासनं साधयेत् ॥ १ ॥ अथवासननियमो नास्ति, यदाह—यस्मिन् यस्मिन्नासनेऽन्यस्यमाने । चेतःस्थैर्यं जायते तत्र तत्र ॥ कार्यो यत्नः पद्मपर्यंककायो–त्सर्गैकांह्रिद्वयंह्रिवज्रासनादौ ॥ १ ॥ कथंन्नूतो योगींद्रः? नासाग्रदत्तसन्नेत्रः, नासाग्रे दत्ते न्यस्ते सती प्रसन्ने नेत्रे लोचने यस्य स तथा. नासाग्रन्यस्तलोचनो हि ध्यानसाधको न्नवति. यदाह ध्यानदंडकस्तुतौ—नासावंशाग्रन्नागस्थितनयनयुगो मुक्तताराप्रचारः । शेषाक्षक्षीणवृत्तिस्त्रिभुवनविवरोद्भ्रांतयोगैकचक्षुः ॥ पर्यंकातंकशून्यः परिकलितघनोच्छ्वासनिः-

श्वासवातः । स ध्यानारूढमूर्त्तिश्चिरमवतु जिनो जन्मसंभूतिभीतः ॥ १ ॥

पुनः कथंभूतः? किंचिदुन्मीलितेक्षणः, किंचिदुन्मीलिते अर्द्धविकासिते ईक्षणे यस्य स तथा. योगिनः समाधिसमये किंचिदुन्मीलिते अक्षिणी भवतः, यदाह—गंभीरस्तंभमूर्त्तिर्व्यपगतकरणव्यापृतिर्मंदमंदं । प्राणायामो ललाटस्थलनिहितमना दत्तनासाग्रदृष्टिः ॥ नाप्युन्मीलन्निमीलन्नयनमतितरां बद्धपर्यंकबंधो । ध्यानं प्रध्याय शुक्लं सकलविदनवद्यः स पायाज्जिनो वः ।१।

पुनरपि कथंभूतः? दूरोत्सारितमानसो विरलीकृतचित्तः, कस्मात्? विकल्पवागुराजालात्कल्पनावागुरिकाबंधात्, यतो विकल्पा एव बाढं कर्मबंधनहेतवः. यदाह—

अशुभा वा शुभा वापि । विकल्पा यस्य चेतसि ॥ स स्वं बध्नात्ययःस्वर्ण—बंधनाभेन कर्मणा ॥ १ ॥ वरं निद्रा वरं मूर्छा । वरं विकलतापि वा ॥ नत्वार्त्तरौद्रदुर्लेश्या—विकल्पाकुलितं मनः ॥ २ ॥ भूयः कथंभूतः? संसारोच्छेदनोत्साहः संसारोच्छेदनार्थं भवपरिहारार्थमुत्साह उद्यमो यस्य स तथा. भवच्छेदकध्यानार्थमुत्साहवतां हि योगसिद्धिः स्यात्, यदाह—उत्साहान्निश्चयाद्धैर्या—त्संतोषात्तत्त्वदर्शनात् ॥ मुनेर्जनपदत्यागात् । षड्भिर्योगः प्रसिद्ध्यति ॥१॥

॥ ५३ ॥ अथ प्राणायाममाह—

अपानद्वारमार्गेण । निस्सरंतं यथेछया ॥ निरुंध्योर्ध्वप्रचाराप्तिं । प्रापयत्यनिलं मुनिः ॥ ५४ ॥ व्याख्या—मुनिर्योगींद्रोऽनिलं पवनमूर्ध्वप्रचाराप्तिं दशमद्वारगोचरताप्राप्तिं प्रापयति. किं कृत्वा? अपानद्वारमार्गेण पायुवर्त्मना पवनं यथेछया निस्सरंतं स्वस्वभावेन गछंतं निरुंध्य संकोच्य, मूलबंधयुक्त्याऽपानपवनमाकुंच्येत्यर्थः. मूलबंधश्चायं—पार्ष्णि भागेन संपीड्य । योनिमाकुंचयेद्गुदं ॥ अपानमूर्ध्वमाकृष्य । मूलबंधो निगद्यते ॥ १ ॥ इदमाकुंचनकर्मैव प्राणायामस्य मूलं. यदुक्तं ध्यानदंडकस्तुतौ—संकोच्यापानरंध्रं हुतवहसदृशं तंतुवत्सूक्ष्मरूपं । धृत्वा हृत्पद्मकोशे तदनु च गलके तालुनि प्राणशक्तिं ॥ नीत्वा शून्यातिशून्यं पुनरपि खगतिं दीप्यमानं समंता—ल्लोकालोकावलोकां कलयति स कलां यस्य तुष्टो जिनेशः ॥ १ ॥ ५४ ॥ अथ पूरकप्राणायाममाह—

द्वादशांगुलपर्यंतं । समाकृष्य समीरणं ॥ पूरयत्यतियत्नेन । पूरकध्यानयोगतः ॥ ५५ ॥ व्याख्या—योगी पुरकध्यानयोगादतियत्नेनातिप्रयत्नेन कोष्टं सकलदेहगतं नाडीगणं वा पव-

॥ ४४ ॥

नेन पूरयति. किं कृत्वा? द्वादशांगुलपर्यंतं समीरणं समाकृष्य, द्वादशांगुलप्रमाणं बहिस्तात्पवनं समंतादाकृष्य, अत्रायमर्थः—पवनो नभस्तत्वे वहमाने नासांतस्थ एव भवति, तेजस्तत्वे वहमाने चत्वार्यंगुलानि बहिस्तादूर्ध्वगः स्फुरति, वायुतत्वे वहमाने षडंगुलानि बहिस्तात्तिरश्चीनश्चरति, पृथ्वीतत्वे वहमानेऽष्टांगुलानि यावद्बहिर्मध्यभावेन तिष्ठति, जलतत्वे वहमाने द्वादशांगुलानि यावदधस्ताद्वहति. यदाह—नासांतर्नभसोऽध्यंहि—द्वयब्धिसंख्यांगुलोत्तरा ॥ तेजोवायुपृथिव्यंबु—बहिर्गतिरुदाहृता ॥ १ ॥ ततो द्वादशांगुलपर्यंतं वारुणं मंडलं प्रचारावसरेऽमृतमयं पवनं समाकृष्येत्यर्थः. एतच्च पूरकध्यानं कर्मतया केचिदाहुः—वक्त्रघ्राणप्राणमाकृष्य तेन । स्थानं भित्वा ब्रह्मसूरीश्वराणां ॥ स्थूलाः सूक्ष्मा नाडिकाः पूरयेद्यद् । विज्ञातव्यं कर्म तत्पूरकाख्यं ॥ ५५ ॥ अथ रेचकप्राणायाममाह—

निस्सार्यते ततो यत्ना—न्नाभिपद्मोदराच्छनैः ॥ योगिना योगसामर्थ्या—द्रेचकाख्यः प्रभंजनः ॥ ५६ ॥ व्याख्या—ततः पूरकादनंतरं योगिना साधकेन योगसामर्थ्यात्प्राणायामाभ्यासवशाद्रेचकाख्यः प्रभंजनो रेचकनामा पवनो नाभिपद्मोदरा[illegible]

मंदंमंदं यत्नादादरान्निस्सार्यते, बहिः क्षिप्यते, तद्रेचकध्यानं. यदाह—वज्रासनस्थिरवपुः
स्थिरधीः स्वचित्त—मारोप्य रेचकसमीरणजन्म चक्रे ॥ स्वांते न रेचयति नाडिगतं समीरं।
तत्कर्म रेचकमिति प्रतिपत्तिमेति ॥ १ ॥ ५६ ॥ अथ कुंभकध्यानमाह—
कुंभवत्कुंभकं योगी । श्वसनं नाभिपंकजे ॥ कुंभकध्यानयोगेन । सुस्थिरं कुरुते क्ष-
णं ॥ ५७ ॥ व्याख्या—योगी कुंभकं कुंभकाख्यं श्वसनं पवनं नाभिपंकजे नाभिकमले कुं-
भकध्यानयोगेन कुंभककर्मप्रयोगेण कुंभवद्घटवद्घटाकारं कृत्वा सुतरां स्थिरं कुरुते. यदाह
—चेतसि श्रयति कुंभकचक्रं । नाडिकासु च न विकृतवातः ॥ कुंभवत्तरति यज्जलमध्ये । त-
द्वदंति किल कुंभककर्म ॥ १ ॥ ५७ ॥ अथ पवनजयेन मनोजयमाह—
इत्येवं गंधवाहाना—माकुंचनविनिर्गमौ ॥ संध्याय निश्चलं धत्ते । चित्तमेकाग्रचिंतने ॥
॥५८॥ व्याख्या—यत्र मनस्तत्र पवनो यत्र पवनस्तत्र मनो वर्त्तते. यदाह—दुग्धांबुवत्संमिलितौ
सदैव । तुल्यक्रियौ मानसमारुतौ हि ॥ यावन्मनस्तत्र मरुत्प्रवृत्ति—र्यावन्मरुत्तत्र मनःप्रवृ-
त्तिः ॥ १ ॥ तत्रैकनाशादपरस्य नाश । एकप्रवृत्तेरपरप्रवृत्तिः ॥ विध्वस्तयोरिंद्रियवर्गशुद्धि—

स्तदूध्वंसनान्मोक्षपदस्य सिद्धिः ॥ २ ॥ इति.

तत इत्येवममुना पूर्वोक्तप्रकारेण पूरकरेचककुंभकक्रमेण गंधवाहानां पवनानामाकुंचननिर्गमौ संसाध्य वातानां संग्रहमोक्षावभ्यस्य चित्तं मन एकाग्रचिंतने समाधिविषये निश्चलं धत्ते. मरुज्जये हि मनोनिश्चलता स्यादेव. यदाह—प्रचलति यदि क्षोणीचक्रं चलत्यचला अपि । प्रलयपवनप्रेंखालोलाश्चलंति पयोधयः ॥ पवनजयिनः सावष्टंभप्रकाशितशक्तयः । स्थिरपरिणतेरात्मध्यानाच्चलंति न योगिनः ॥ १ ॥ ५८ ॥ अथ भावस्यैव प्राधान्यमाह—

प्राणायामक्रमप्रौढि–रत्र रुढ्यैव दर्शिता ॥ क्षपकस्य यतः श्रेण्या–रोहे भावो हि कारणं ॥ ५९ ॥ व्याख्या—अत्र श्रेण्यारोहे क्षपकश्रेण्यारोहविषये प्राणायामक्रमप्रौढिः पवनाभ्यासक्रमप्रगल्भता रुढ्यैव प्रसिद्धिमात्रतयैव दर्शिता. यस्मात्कारणात् हि स्फुटं क्षपकस्य भाव एव केवलोत्तमकारणं, न तु प्राणायामादिडंबरः, यदुक्तं चर्पटिनापि—नासौ कंदं नाडीवृंदं । वायोश्चारः प्रत्याहारः ॥ प्राणायामो बीजग्रामो । ध्यानाभ्यासो मंत्रन्यासः ॥ १ ॥ हृत्पद्मस्थं भ्रूमध्यस्थं । नासाग्रस्थं श्वासांतःस्थं ॥ तेजःशुद्धं ध्यानं बुद्धं ॐकाराख्यं सूर्यप्रख्यं ॥२॥

ब्रह्माकाशं शून्याभासं । मिथ्याजल्पं चिंताकल्पं ॥ कायाक्रांतं चित्तभ्रांतं । त्यक्त्वा सर्वं मिथ्या गर्वं ॥ ३ ॥ गुर्वादिष्टं चिंतोत्सृष्टं । देहातीतं भावोपेतं ॥ त्यक्तद्वंद्वं नित्यानंदं । शुद्धं तत्वं जानीहि त्वं ॥ ४ ॥ अन्यच्च—ॐकाराभ्यसनं विचित्रकरणैः प्राणस्य वायोर्जयात् । तेजश्चिंतनमात्मकायकमले शून्यांबरालंबनं ॥ त्यक्त्वा सर्वमिदं कलेवरगतं चिंतामनोविभ्रमं । तत्वं पश्यत जल्पकल्पनकलातीतं स्वभावस्थितं ॥१॥५९॥ अथाद्यशुक्लध्यानस्य नामान्याह—

सवितर्कं सविचारं । सपृथक्त्वमुदाहृतं ॥ त्रियोगयोगिनः साधो-राद्यं शुक्लं सुनिर्मलं ॥ ॥ ६० ॥ व्याख्या—त्रियोगयोगिनः साधोर्मनोवचःकाययोगवतो मुनेराद्यं प्रथमं शुक्लध्यानमुदाहृतं प्रोक्तं. तत्कथंभूतं? सह वितर्केण वर्त्तत इति सवितर्कं, सह विचारेण वर्त्तत इति सविचारं, सह पृथक्त्वेन वर्त्तत इति सपृथक्त्वं, इति विशेषणत्रयोपेतत्वात् पृथक्त्ववितर्कसविचारनामकं प्रथमं शुक्लध्यानमिति. ॥ ६० ॥ अथ तद्विशेषणत्रयस्य स्वरूपमाह—

श्रुतचिंतो वितर्कः स्यात् । विचारः संक्रमो मतः ॥ पृथक्त्वं स्यादनेकत्वं । भवत्येतत्त्रयात्मकं ॥ ६१ ॥ व्याख्या—तत्प्रथमं शुक्लध्यानं त्रयात्मकं, क्रमोत्क्रमग्रहीतविशेषणत्रयरूपं.

तत्र श्रुतचिंतारूपो वितर्कः, अर्थशब्दयोगांतरेषु संक्रमो विचारः, द्रव्यगुणपर्यायादिभिरन्यत्वं पृथक्त्वं. ॥ ६१ ॥ अथैतत्त्रयस्य क्रमेण व्यक्त्यर्थं व्याचिख्यासुः प्रथमं वितर्कमाह—

स्वशुद्धात्मानुभूतात्म-भावश्रुतावलंबनात् ॥ अंतर्जल्पो वितर्कः स्याद् । यस्मिंस्तत्सवितर्कजं ॥ ६२ ॥ व्याख्या—यस्मिन् ध्यानेंतर्जल्पोंतरंगध्वनिरूपो वितर्को विचारणात्मकस्तत्सवितर्कं ध्यानं स्यात्. कस्मात्? स्वशुद्ध्यात्मानुभूतात्मभावश्रुतावलंबनात्, स्वकीयनिर्मलपरमात्मतत्वानुभवमयांतरंगभावगतागमावलंबनतः, इत्युक्तं सवितर्कं ध्यानं ॥ ६२ ॥ अथ सविचारमाह—

अर्थादर्थांतरे शब्दा-च्छब्दांतरे च संक्रमः ॥ योगाद्योगांतरे यत्र । सविचारं तदुच्यते ॥ ॥ ६३ ॥ व्याख्या—यत्र ध्याने स एव पूर्वोक्तो वितर्को विचारणात्मकोऽर्थांतरे संक्रमते, योगाद्योगांतरे संक्रमते तद्ध्यानं सविचारं संक्रमणमुच्यत इति ॥ ६३ ॥ अथ सपृथक्त्वमाह—

द्रव्याद् द्रव्यांतरं याति । गुणाद्याति गुणांतरं ॥ पर्यायादन्यपर्यायं । सपृथक्त्वं भवत्यतः ॥ ६४ ॥ व्याख्या—यत्र ध्याने स एव पूर्वोक्तो वितर्कः सविचारोऽर्थव्यंजनयोगांतरसंक्र-

मणरूपोऽपि निजशुद्धात्मद्रव्यांतरं याति, अथवा गुणाद्गुणांतरं याति, यद्वा पर्यायांतरं याति.
तत्र—सहजाता गुणा द्रव्ये । सुवर्णे पीतता यथा ॥ क्रमभूतास्तु पर्याया । मुद्राकुंडलताद-
यः ॥ १ ॥ तेषु द्रव्यगुणपर्यायांतरेषु अन्यत्वं पृथक्त्वं, तदस्ति यत्र ध्याने तत्सपृथक्त्वं ॥६४॥
अथाद्यशुक्लध्यानजनितां शुद्धिमाह—

इति त्रयात्मकं ध्यानं । प्रथमं शुक्लमीरितं ॥ प्राप्नोत्यतः परां शुद्धिं । सिद्धिश्रीसौख्य-
वर्णिकां ॥ ६५ ॥ व्याख्या—इति त्रयात्मकं पृथक्त्ववितर्कसविचारात्मकं प्रथमं शुक्लध्यानं
कथितं, तस्माद्ध्यानात्परां प्रकृष्टां शुद्धिं प्राप्नोति, कथंभूतां? सिद्धिश्रीसौख्यवर्णिकां मुक्तिल-
क्ष्मीसुखविदर्शनिकामासादयतीत्यर्थः ॥ ६५ ॥ अथैतस्यैव विशेषस्वरूपमाह—

यद्यपि प्रतिपात्येत—दुक्तं ध्यानं प्रजायते ॥ तथाप्यतिविशुद्धत्वा—दूर्ध्वस्थानं समीहते
॥ ६६ ॥ व्याख्या—यद्यप्येतदुक्तं ध्यानं प्रतिपाति पतनशीलं प्रजायते समुत्पद्यते, तथाप्यति-
विशुद्धत्वादतिनैर्मल्यत ऊर्ध्वस्थानमग्रेतनं गुणस्थानं समीहते, तदारोहाय धावतीत्यर्थः. त-
थापूर्वगुणस्थानस्थो जीवो निद्राद्विकवेदद्विकपंचेंद्रियत्वप्रशस्तविहायोगतित्रसनवकवैक्रिया-

हारकतैजसकार्मणवैक्रियोपांगआहारकोपांगआद्यसंस्थाननिर्माणतीर्थकृत्ववर्णचतुष्कागुरुल-
घूपघातपराघातोच्छ्वासरूपद्वात्रिंशत्प्रकृतिव्यवच्छेदात् षड्विंशतिबंधकः, अन्यसंहननसम्यक्त्वो-
दयव्यवच्छेदात् द्वासप्ततेर्वेदयिताष्टत्रिंशदधिकशतसत्ताको भवति. ॥ ६६ ॥ इति क्षपकस्याष्टमं
॥ अथ क्षपकोऽनिवृत्तिगुणस्थानमारोहन् याः प्रकृतीर्यत्र यथा क्षिपति तत्र तास्तथा श्लो-
कपंचकेनाह—

अनिवृत्तिगुणस्थानं । ततः समधिगच्छति ॥ गुणस्थानस्य तस्यैव । भागेषु नवसु क्रमा-
त् ॥ ६७ ॥ गतिः श्वाभ्री च तैरश्ची । द्वे तयोरानुपूर्विके ॥ साधारणत्वमुद्योतः । सूक्ष्मत्वं
विकलत्रयं ॥ ६८ ॥ एकेंद्रियत्वमाताप—स्त्यानगृद्ध्यादिकत्रयं ॥ स्थावरत्वमिहाद्यंशे । क्षी-
यंते षोडशेत्यमूः ॥ ६९ ॥ अष्टौ मध्यकषायाश्च । द्वितीयेऽथ तृतीयके ॥ षंढत्वं तुर्यके स्त्रीत्वं
। हास्यषट्कं च पंचमे ॥ ७० ॥ चतुर्थांशेषु शेषेषु । क्रमेणैवातिशुद्धितः ॥ पुंवेदश्च ततः क्रो-
धो । मानो माया च नश्यति ॥ ७१ ॥ व्याख्या—ततस्तस्मादष्टमगुणस्थानादनंतरं क्षपको
निवृत्तिगुणस्थानं नवमं समारोहति समधिगच्छति, ततस्तस्यैव गुणस्थानस्य नवसु भागेषु

कृतेषु आद्यंशे प्रथमे भागे इत्यमूरित्येताः षोडश कर्मप्रकृतयः क्षीयंते.

इत्यमूः काः? श्वाभ्री गतिर्नरकगतिः, तैरश्ची तिर्यग्गतिः, तयोर्नरकातिरश्चोर्द्वे आनपूर्विके, नरकानुपूर्वी तिर्यगानुपूर्वी चेति. साधारणत्वं साधारणनाम, उद्योत उद्योतनाम, सूक्ष्मत्वं सूक्ष्मनाम, विकलत्रयं द्वित्रिचतुरिंद्रियजातिलक्षणं, एकेंद्रियत्वमेकेंद्रियजातिरूपं, आतप आतपनाम, स्त्यानगृध्ध्यादिकत्रयं निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिरितित्रिकं, स्थावरत्वं स्थावरनामकर्मेति षोडश कर्मप्रकृतयोनिवृत्तिगुणस्थानस्य प्रथमभागे क्षीयंते. तत्राष्टौ मध्यकषाया अप्रत्याख्यानप्रत्याख्यानलक्षणा द्वितीये भागे क्षीयंते, तृतीये भागे षंढत्वं नपुंसकत्वं क्षीयते. तुर्यके चतुर्थके भागे स्त्रीत्वं क्षीयते, पंचमे भागे हास्यरत्यरतिभयशोकजुगुप्सेति षट्कं च क्षीयते. शेषेषु चतुर्थेषु षष्टादिनवमांत्येषु क्रमेणैवातिशुद्धितो ध्यानस्यातिनैर्मल्यतः पुंवेदः संज्वलनक्रोधो मानो माया च नश्यंति. अयमर्थ—षष्टे भागे पुंवेदः क्षीयते, सप्तमे भागे संज्वलनक्रोधः क्षीयते, अष्टमे संज्वलनमानः क्षीयते, नवमे भागे संज्वलनमाया च क्षीयते. तथा चानिवृत्तिगुणस्थानस्थो जीवो हास्यरत्यरतिभयशोकजुगुप्साव्यव-

च्छेदाद् द्वाविंशतेर्बंधकः, हास्यषट्कोदयव्यवच्छेदात् षट्षष्टेर्वेदयिता, नवमांशे मानांतपंचात्रिंशत्प्रकृतिसत्ताव्यवच्छेदात् त्र्युत्तरशतसत्ताको भवति ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ इति क्षपकस्य नवमं. अथ क्षपकस्य दशमगुणस्थानमाह—

ततोऽसौ स्थूललोभस्य । सूक्ष्मत्वं प्रापयन् क्षणात् ॥ आरोहति मुनिः सूक्ष्म—संपरायं गुणास्पदं ॥ ७२ ॥ व्याख्या—ततो नवमगुणस्थानादनंतरमसौ क्षपको मुनिः सूक्ष्मसंपरायास्पदं सूक्ष्मसंपरायनामकं गुणस्थानमारोहति. किं कुर्वन् ? क्षणात्क्षणमात्रात्स्थूललोभस्य स्थूलरूपस्य संज्वलनलोभस्य सूक्ष्मत्वं सूक्ष्माणुरूपत्वं प्रापयन्, तथा सूक्ष्मसंपरायस्थो जीवः पुंवेदसंज्वलनचतुष्कबंधव्यवच्छेदाद् द्व्युत्तरशतसत्ताको भवति ॥ ७२ ॥ इति क्षपकस्य दशमं ॥ अथ क्षपकस्यैकादशं गुणस्थानं न भवतीत्याह—

एकादशं गुणस्थानं । क्षपकस्य न संभवेत् ॥ किंतु स सूक्ष्मलोभांशान् । क्षपयन् द्वादशं व्रजेत् ॥ ७३ ॥ व्याख्या—क्षपकस्यैकादशं गुणस्थानकं न नैव भवेत्. किंतु दशमादेव गुणस्थानात्क्षपकः सूक्ष्मलोभांशान् सूक्ष्मीकृतलोभखंडान् क्षपयन् सन् द्वादशं क्षीणमो-

हाख्यं गुणस्थानं व्रजेच्छेदित्यत्र क्षपकश्रेणीं च समर्थयति. तत्क्रमश्चायं—अणमिच्छमीस-सम्मं । अठनपुंसित्थिवेअठकं च ॥ पुंवेयं च खवेइ । कोहाइए असंजलणा ॥ १ ॥ अथ तत्र शुक्लध्यानस्य द्वितीयांशाश्रयणमाह—

भूत्वाथ क्षीणमोहात्मा । वीतरागो महायतिः ॥ पूर्ववद्भावसंयुक्तो । द्वितीयं शुक्लमाश्रयेत् ॥ ७४ ॥ व्याख्या—अथवानंतरं स क्षपकः क्षीणमोहात्मा भूत्वा क्षीणमोहगुणस्थानात्क्षापरिणतिमयो भूत्वा द्वितीयं शुक्लध्यानं पूर्ववत्प्रथमशुक्लध्यानरीत्या श्रयेद्भजेत्. कथंभूतः क्षपकः वीतरागो विशेषेण वीतो रागो यस्मात्स तथा. पुनरपि कथंभूतः? महायतिर्महांश्चासौ यतिश्च महायतिः, यथाख्यातचारित्र इति. पुनः कथंभूतः? भावसंयुक्तो विशुद्धतरभावोपेतः. एवंविधः क्षपको द्वितीयं शुक्लध्यानं श्रयेदित्यर्थः ॥ ७४ ॥ अथ तदेव शुक्लध्यानविशेषणमाह—

अपृथक्त्वमविचारं । सवितर्कगुणान्वितं ॥ संध्यायत्येकयोगेन । शुक्लध्यानं द्वितीयकं ॥ ७५ ॥ व्याख्या—स क्षपकः क्षीणमोहगुणस्थानवर्त्ती द्वितीयं शुक्लध्यानं एकयोगेन एक-

तरयोगेन संध्यायति. यदाह—एकं त्रियोगभाजा—माद्यं स्यादपरमेकयोगवतां ॥ तनुयोगि-
नां तृतीयं । नियोगिनां चतुर्थं तु ॥ १ ॥ कथंभूतं? अपृथक्त्वं पृथक्त्ववर्जितं, अविचारं वि-
चाररहितं, सवितर्कगुणान्वितं वितर्कमात्रगुणोपेतं द्वितीयं शुक्लध्यानं ध्यायतीत्यर्थः ॥ ७५ ॥
अथाऽपृथक्त्वमेव व्यक्तमाह—

निजात्मद्रव्यमेकं वा । पर्यायमथवा गुणं ॥ निश्चलं चिंत्यते यत्र । तदेकत्वं विदुर्बुधाः ॥
॥ ७६ ॥ व्याख्या—बुधा ज्ञाततत्वास्तदेकत्वमपृथक्त्वं विदुरवधारयंतिस्म कथयंतिस्म. त-
त्किं? ध्यायकेन यन्निजात्मद्रव्यमेकं केवलं स्वकीयविशुद्धिपरमात्मद्रव्यं, वाथवातस्यैव परमा-
त्मद्रव्यस्य एकं केवलं पर्यायं, वाथवा एकमद्वितीयं गुणं वा, तदत्र गुणपर्यायविशेषः पूर्वोक्त
एव, एतदेवंविधमेकगुणं वा एकं पर्यायं वा, निश्चलं चलनवर्जितं, यत्र ध्यायते, तदेकत्वमि-
ति ॥ ७६ ॥ अथाऽविचारत्वमाह—

यद्व्यंजनार्थयोगेषु । परावर्त्तविवर्जितं ॥ चिंतनं तदविचारं । स्मृतं सद्ध्यानकोविदैः ॥
॥ ७७ ॥ व्याख्या—संप्रति सद्ध्यानकोविदत्वं शास्त्राम्नायविशेषादेवास्ति न त्वनुभवात्, यदा-

हुः श्रीहेमचंद्रसूरिपादाः—अनविच्छित्याम्नायः । समागतोऽस्येति कीर्त्यतेऽस्माभिः ॥ दुःकरमप्याधुनिकैः । शुक्लध्यानं यथाशास्त्रं ॥ १ ॥ तैः सद्ध्यानकोविदैः शास्त्राम्नायावगतशुक्लध्यानरहस्यैस्तदविचारं अविचारविशेषणोपेतं द्वितीयं शुक्लं स्मृतं. तत्किं? यत्पूर्वोक्तस्वरूपेषु व्यंजनार्थयोगेषु शब्दाभिधेययोगरूपेषु परावर्त्तविवर्जितं, शब्दाच्छब्दांतरमित्यादिसंक्रमेण रहितं चिंतनं श्रुतानुसारादेव क्रियते तदविचारमिति ॥ ७७ ॥ अथ सवितर्कत्वमाह—

निजशुद्धात्मनिष्ठं हि । भावश्रुतावलंबनात् ॥ चिंतनं क्रियते यत्र । सवितर्कं तदुच्यते ॥ ७८ ॥ व्याख्या—यत्र निजशुद्धात्मनिष्ठं स्वकीयातिविशुद्धपरमात्मलीनं हि स्फुटं चिंतनं सूक्ष्मविचारणात्मकं क्रियते, तत्सवितर्कैकगुणोपेतं द्वितीयं शुक्लध्यानं. कस्मात्? भावश्रुतावलंबनात् सूक्ष्मांतर्जल्परूपभावागमश्रुतावलंबमात्रचिंतनादिति ॥ ७८ ॥ अथ द्वितीयशुक्लजनितसमरसीभावमाह—

इत्येकत्वमविचारं । सवितर्कमुदाहृतं ॥ तस्मिन् समरसीभावं । धत्ते स्वात्मानुभूतितः ॥ ७९ ॥ व्याख्या—इति पूर्वोक्तप्रकारेण एकत्वाविचारसवितर्करूपविशेषणतयोपेतं द्वितीयं

शुक्लध्यानमुदाहृतं कथितं. तस्मिन् द्वितीये शुक्लध्याने वर्त्तमानो ध्यानी, ध्यानात् समरसीन्नाव—स्तदेकीकरणं मतं ॥ आत्मा यतः पृथक्त्वेन । लीयते परमात्मनि ॥ १ ॥ तं समरसीन्नावं धत्ते धारयति, कुतः? स्वात्मानुन्नूतितः, स्वस्यात्मनोऽनुन्नूतिरनुन्नवनं स्वात्मानुन्नूतिस्तस्याः ॥ ७९ ॥ अथ क्षीणमोहगुणस्थानाद्यवसाने यत्करोति तदाह—

इत्येतद्ध्यानयोगेन । प्लुष्यत्कर्मेंधनोत्करः निद्राप्रचलयोर्नाश—मुपांत्ये कुरुते क्षणे ॥ ८० ॥ व्याख्या—इत्येतत्पूर्वोक्तध्यानयोगेन द्वितीयशुक्लध्यानसमायोगेन प्लुष्यत्कर्मेंधनोत्करो दह्यमानकर्मसमिदुत्करो योगींद्र उपांत्येंत्यसमीपसमये निद्राप्रचलयोर्नाशं करोति क्षयं कुरुते ॥ ८० ॥ अथांत्यसमये यत्करोति तदाह—

अंत्ये दृष्टिचतुष्कं च । दशकं ज्ञानविघ्नयोः ॥ क्षपयित्वा मुनिः क्षीण—मोहः स्यात्केवलात्मकः ॥ ८१ ॥ व्याख्या—क्षपको मुनिः क्षीणमोहस्यांत्ये समये दृष्टिचतुष्कं चक्षुर्दर्शनादिदर्शनचतुष्कं ज्ञानांतरायदशकं चेत्येताश्चतुर्दशप्रकृतीः क्षपयित्वा क्षीणमोहांशः सन् केवलात्मकः स्यादिति. तथा क्षीणमोहगुणस्थानस्थो जीवो दर्शनचतुष्कज्ञानांतरायदशकोच्चय-

शोरूपषोडशबंधव्यवच्छेदादेकसातवेद्यबंधकः, तथा संज्वलनलोभऋषभनाराचनाराचोदयव्यवच्छेदात्सप्तपंचाशत्प्रकृतेर्वेदयिता, लोभसत्ताक्षपकत्वादेकोत्तरशतसत्ताको भवति ॥ ७१ ॥ इति क्षपकस्य द्वादशं ॥ अथ क्षीणमोहांतप्रकृतीनां संख्यामाह—

एवं च क्षीणमोहांता । त्रिषष्टिप्रकृतिस्थितिः ॥ पंचाशीतिर्जरद्वस्त्र—प्रायाः शेषाः सयोगिनि ॥७२॥ व्याख्या—एवं पूर्वोक्तप्रकारेण त्रिषष्टिप्रकृतीनां स्थितिः क्षीणमोहांतैव. कोऽर्थः? चतुर्थगुणस्थानादारभ्य क्षीयमाणानां प्रकृतीनां त्रिषष्टिः क्षीणमोहे संपूर्णाः, यथैकस्याः प्रकृतेश्चतुर्थगुणस्थाने क्षयः, पुनरेकस्याः पंचमे, अष्टानां सप्तमे, षट्त्रिंशत्प्रकृतीनां नवमे, सप्तदशप्रकृतीनां द्वादशे क्षयः. इत्येवं त्रिषष्टिप्रकृतीनां क्षीणमोहांतैव स्थितिरुक्ता. तथा शेषास्त्रिषष्टिव्यतिरिक्ताः पंचाशीतिप्रकृतयो जरद्वस्त्रप्राया अत्यर्थं जीर्णचीवरकल्पाः सयोगिगुणस्थाने भवंति ॥ ७३ ॥ अथ सयोगिनि यो भावो भवति, ये च सम्यक्त्वचारित्रे भवतस्तदाह—

भावोऽत्र क्षायिकः शुद्धः । सम्यक्त्वं क्षायिकं परं ॥ क्षायिकं हि यथाख्यातं । चारित्रं तस्य निश्चितं ॥ ७४ ॥ व्याख्या—तस्य केवलात्मनो भगवतोऽत्र सयोगिगुणस्थाने भावः

क्षायिक एव शुद्धोऽतिनिर्मलो भवति. सम्यक्त्वं परं प्रकृष्टं क्षायिकमेव हि स्फुटं चारित्रं क्षा-
यिकं यथाख्यातनामकं निश्चितं भवति. कोऽर्थः? अत्रौपशमिकक्षायोपशमिकभावयोरभा-
वत्वात् क्षायिको भावः, तथा दर्शनमोहनीयस्य चारित्रमोहनीयस्य क्षयत्वात्क्षायिके सम्य-
क्त्वचारित्रे इति ॥ ८५ ॥ अथ तस्य केवलात्मनः केवलज्ञानबलमाह—

चराचरमिदं विश्वं । हस्तस्थामलकोपमं ॥ प्रत्यक्षं भासते तस्य । केवलज्ञानभास्वतः
॥ ८६ ॥ व्याख्या—तस्य केवलज्ञानभास्वतः केवलाधिगममार्तंडस्य चराचरं विश्वं सचरा-
चरं जगत् हस्तस्थामलकोपमं हस्ततलगृहीतामलकफलोपमं प्रत्यक्षं साक्षात्कारेण भासते
दीप्यत इति. अत्र भास्वतः सूर्यस्योपमानं व्यवहारमात्रेणैव दर्शितं. निश्चयतो निश्चयेन के-
वलज्ञानसूर्ययोर्महदंतरं, यदाह—चंदाइच्चगहाणं । पहा य यासेइ परिमियं खित्तं ॥ केव-
लिअनाणलंभो । लोआलोअं पयासेइ ॥ १ ॥ ८७ ॥ अथार्जिततीर्थकृत्कर्मणो विशेषमाह—

विशेषात्तीर्थकृत्कर्म । येनास्त्यर्जितमुर्जितं ॥ तत्कर्मोदयतोऽत्रासौ । स्याज्जिनेंद्रो जग-
त्पतिः ॥ ८८ ॥ व्याख्या—विशेषादर्हद्भक्तिप्रमुखविंशतिपुण्यस्थानकविशेषाराधनाद्येन जंतु-

ना ऽर्जितं स्फीतं तीर्थकृत्कर्माजितमुपार्जितमस्ति, तीर्थकृत्कर्मार्जने हि हेतुभूतान्यर्हद्भक्तिमुख्यानि विंशतिस्थानान्येतानि, यदाह—अरिहंत सिद्ध पवयण-गुरु थेर बहुस्सुए तवस्सीसु ॥ वच्छलया एएसिं । अभिक्खनाणोवओगे अ ॥ १ ॥ दंसणविणए आवस्सए अ । सीलव्वए निरइयारे ॥ खणलवतवच्चियाए । वेयावच्चे समाहीअ ॥ २ ॥ अपुव्वनाणगहणे । सुअभत्तीपवयणे पभावणया ॥ एएहिं कारणेहिं । तित्थयरत्तं लहइ जीवो ॥ ३ ॥ ततोऽत्र सयोगिनि गुणस्थाने तत्कर्मोदयतस्तत्तीर्थकृत्कर्मोदयात् असौ केवली जगत्पतिस्त्रिभुवनाधिपतिर्जिनेंद्रः स्यात्. जिनाः सामान्यकेवलिनस्तेषामिंद्र इव जिनेंद्रः ॥ ७५ ॥ अथ तीर्थकृतो महिमानमाह—

ससर्वातिशयैर्युक्तः । सर्वामरनरैर्नतः ॥ चिरं विजयते सर्वो-त्तमं तीर्थं प्रवर्त्तयन् ॥७६॥

व्याख्या—स भगवांस्तीर्थकरः, चउरो जम्मप्पभिइ । इक्कारस कम्मसंखए जाए ॥ नव दस य देवजणिए । चउतीसं अइसए वंदे ॥ १ ॥ इत्येवंविधैश्चतुस्त्रिंशत्संख्यैरतिशयैर्युक्तः, तथा सर्वामरनरैर्नतः सकलमानवदेवनमस्कृतः, सर्वोत्तमं सकलशासनप्रवरं तीर्थं शासनं प्र-

वर्त्तयन् प्रकटयंश्चिरं देशोनां पूर्वकोटिं यावदुत्कृष्टतो विजयते ॥ ७६ ॥ अथ तत्तीर्थकृत्कर्म यथा वेद्यते तदाह—

वेद्यते तीर्थकृत्कर्म । तेन सद्देशनादिभिः ॥ भूतले भव्यजीवानां । प्रतिबोधादि कुर्वता ॥ ७७ ॥ व्याख्या—तेन तीर्थकृता तत्कर्म वेद्यतेऽनुभूयते. किं कुर्वता? भूतले पृथ्वीमंडले भव्यजीवानां प्रतिबोधादि कुर्वता. आदिशब्दाद्देशविरतिसर्वविरत्यारोपादि विदधता. काभिः? सद्देशनादिभिस्तत्त्वोपदेशादिभिः कृत्वा वेद्यते. यदुक्तं—तं च कहं वेइज्जइ । अगिलाए धम्म-देसणाइहिं ॥ इति. ॥ ७७ ॥ अथ केवलिसमुद्घातकारणमाह—

वेदायुषः स्थितिर्न्यूना । सकाशाद्वेद्यकर्मणः ॥ तदा तत्तुल्यतां कर्त्तुं । समुद्घातं करोत्यसौ ॥ ७८ ॥ व्याख्या—असौ केवली यदि वेद्यकर्मणः सकाशाद्वेदनीयकर्मसमीपादायुषः स्थितिरायुःकर्मावस्थितिर्न्यूना स्तोका भवति, तदा तत्तुल्यतां कर्त्तुं आयुर्वेद्ययोस्तुल्यताकरणार्थं समुद्घातं करोति. ॥ ७८ ॥ अथ तमेव समुद्घातमाह—

दंडत्वं च कपाटत्वं । मंथानत्वं च पूरणं ॥ कुरुते सर्वलोकस्य । चतुर्भिः समयैरसौ ॥

॥ ८० ॥ व्याख्या—प्रथमसमुद्घातस्वरूपमुच्यते—यथास्वभावस्थितानामात्मप्रदेशानां वेदनाभिः सप्तभिः कारणैः समंतादुद्घातनं, स्वभावादन्यभावेन परिणमनं समुद्घातः, स च सप्तधा, वेदनासमुद्घातः, कषायसमुद्घातः, मरणसमुद्घातः, वैक्रियसमुद्घातः, तैजससमुद्घातः, आहारकसमुद्घातः, केवलिसमुद्घातश्च. यदाह—वेयण कसाय मरणे । वेउव्वि तेअ आहार केवलिअ ॥' इत्येतेषु सप्तसु समुद्घातेष्वंत्यः केवलिसमुद्घातः, तदर्थमसौ केवली आयुर्वेद्ययोः समीकरणार्थमात्मप्रदेशैरूर्ध्वाधोलोकांतं यावत्प्रसारितैरेकस्मिन् समये दक्षिणोत्तरयोर्दिशोरप्यात्मप्रदेशैः कपाटाकारविस्तृतैर्मंथानत्वं मंथानाकारत्वं कुरुते. चतुर्थे समयेंतरालपूरणेन सर्वलोकस्य चतुर्दशरज्ज्वात्मलोकस्य पूरणं कुरुते. एवं केवली समुद्घातं कुर्वन् चतुर्भिः समयैर्विश्वव्यापी भवति ॥ ८० ॥ अथ ततो निवृत्तिमाह—

समीकृत्यो—त्क्रमात्तस्मान्निवर्त्तते कर्मलेशान्
एवमात्मप्रदेशानां । प्रसारणविधानतः ॥

॥ ८१ ॥ व्याख्या—एवममुना पूर्वोक्तप्रकारेण केवली स्वात्मप्रदेशानां प्रसारणविधानतो विस्तारणप्रयोगात् कर्मलेशान् समीकृत्य तस्माडुपक्रमाद्विपरीतक्रमान्निवर्त्तते. अयमर्थः—च-

तुर्भिः समयैर्जगत्पूरणं कृत्वा, पंचमे समये पूरणान्निवर्त्तते, षष्टे समये मंथानत्वं निवर्त्तयति, सप्तमे समये कपाटत्वमुपसंहरति, अष्टमे समये दंडत्वमुपसंहरन् स्वन्नावस्थो न्नवति, यदाह वाचकमुख्यः––दंडं प्रथमे समये । कपाटमथ चोत्तरे तथा समये ॥ मंथानमथ तृतीये । लोकव्यापी चतुर्थे तु ॥ १ ॥ संहरति पंचमे त्वं–तराणि मंथानमथ पुनः षष्टे ॥ सप्तमके तु कपाटं । संहरति ततोऽष्टमे दंडं ॥ २ ॥ ए१ ॥ अथ केवली समुद्घातं कुर्वन् यथा-योगवान् आहारकश्च न्नवति, तथा श्लोकद्वयेनाह—

समुद्घातस्य तस्याद्ये । चाष्टमे समये मुनिः ॥ औदारिकांगयोगः स्याद् । द्विषट्सप्तमकेषु तु ॥ ए२ ॥ मिश्रौदारिकयोगी च । तृतीयाद्येषु तु त्रिषु ॥ समयेष्वेककर्मांग–धरोऽनाहारकश्च सः ॥ ए३ ॥ व्याख्या—स केवली समुद्घातं कुर्वन् आद्ये प्रथमेंत्ये चेति समयद्वये औदारिकांगयोगः स्यात्, औदारिकशरीरयोगवान् न्नवति. द्वितीयषष्टसप्तमकेषु तु पुनः स केवली समुद्घातं कुर्वन् आद्ये मिश्रौदारिकयोगी च स्यात्, मिश्रौदारिकयोगवान् न्नवति, मिश्रत्वं चात्र कार्मणेनैव सहौदारिकस्य. तृतीयाद्येषु त्रिषु तु पुनस्तृतीयप्रमुखेषु

त्रिषु समयेषु तृतीयचतुर्थपंचमलक्षणेषु स केवली केवलैककर्मांगधरो ञवति, केवलकार्मण-काययोगी ञवति. तदा तत्र समये स केवली केवलकार्मणकाययोगत्वादनाहारको ञवति. यदाह—औदारिकप्रयोक्ता । प्रथमाष्टमसमययोरसाविष्टः ॥ मिश्रौदारिकयोक्ता । सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्मणशरीरयोक्ता । चतुर्थके पंचमे तृतीये च ॥ समयत्रये च तस्मिन् । ञवत्यनाहारको नियमात् ॥ २ ॥ ९२ ॥ अत्र यः केवली समुद्घातं करोति, यश्च न करोति तदाह—

यः षण्मासाधिकायुष्को । लञते केवलोद्गमं ॥ करोत्यसौ समुद्घात-मन्ये कुर्वंति वा न वा ॥ ९३ ॥ व्याख्या—यः षण्मासाधिकायुष्कः केवलोद्गमं केवलोत्पत्तिं लञते प्राप्नोति, असौ समुद्घातं निश्चयेन करोति. अन्ये षण्मासमध्यायुष्काः केवलिनः समुद्घातं कुर्वंति वाथवा न कुर्वंति च, तेषां समुद्घातकरणञजनैव. यदाह—छम्मासाऊ सेसे । उपन्नं जेसि केवलं नाणं ॥ ते नियमा समुग्घाइय । सेसा समुग्घायञइअवा ॥ १ ॥ ९४ ॥ अथ समुद्घातान्निवृत्तो यत्करोति तदाह—

समुद्घातान्निवृत्तोऽसौ । मनोवाक्काययोगवान् ॥ ध्यायेद्योगनिरोधार्थं । शुक्लध्यानं तृतीयकं ॥ ८५ ॥ व्याख्या—असौ मनोवाक्काययोगवान् केवली सयोगिकेवली समुद्घातान्निवृत्तः सन् योगनिरोधार्थं योगनिरोधनिमित्तं तृतीयं शुक्लध्यानं ध्यायेत् ॥ ८५ ॥ अथ तदेव तृतीयं शुक्लध्यानमाह—

आत्मस्पंदात्मिका सूक्ष्मा । क्रिया यत्रानिवृत्तिका ॥ तत्तृतीयं भवेच्छुक्ल—सूक्ष्मक्रियानिवृत्तिकं ॥ ८६ ॥ व्याख्या—तस्मिन्नवसरे तस्य केवलिनस्तृतीयं सूक्ष्मक्रियानिवृत्तिकनाम शुक्लध्यानं भवति. तत्किं? यत्रात्मस्पंदात्मिका सूक्ष्मा क्रियाऽनिवृत्तिका भवति. कोऽर्थः? आत्मस्पंदात्मिका क्रियापि सूक्ष्मत्वादनिवृत्तिका भवति, सूक्ष्मत्वं मुक्त्वा पुनः स्थूलत्वं न भजतीत्यर्थः. ॥८६॥ अथ मनोवचःकाययोगानामपि यथा यथा सूक्ष्मत्वं करोति, तथा तथा श्लोकचतुष्टयेनाह—

बादरे काययोगेऽस्मिन् । स्थितिं कृत्वा स्वभावतः ॥ सूक्ष्मीकरोति वाक्चित्त—योगयुग्मं सबादरं ॥ ८७ ॥ त्यक्त्वा स्थूलवपुर्योगे । सूक्ष्मवाक्चित्तयोः स्थितिं ॥ कृत्वा नयति

सूक्ष्मत्वं । काययोगं तु बादरं ॥ ९८ ॥ सुसूक्ष्मकाययोगेऽथ । स्थितिं कृत्वा पुनः क्षणं ॥ निग्रहं कुरुते सद्यः । सूक्ष्मवाक्‌चित्तयोगयोः ॥ ९९ ॥ ततः सूक्ष्मवपुर्योगे । स्थितिं कृत्वा क्षणं हि सः ॥ सूक्ष्मक्रियं निजात्मानं । चिद्रूपं विंदति स्वयं ॥ १०० ॥ व्याख्या—स केवली सूक्ष्मक्रियानिवृत्तिनामकतृतीयशुक्लध्यानध्याता अचिंत्यात्मवीर्यशक्त्याऽस्मिन् बादरे काययोगे स्वभावतः स्थितिं कृत्वा बादरं वाक्‌चित्तयोगयुग्मं स्थूलवचोमनोयोगयुगलं सूक्ष्मीकरोति. ततः सूक्ष्मबादरं वपुर्योगं त्यक्त्वा सूक्ष्मवाक्‌चित्तयोः स्थितिं कृत्वा बादरकाययोगं सूक्ष्मत्वं प्रापयति, स सूक्ष्मकाययोगे पुनः क्षणं क्षणमात्रं स्थितिं कृत्वा सद्यस्तत्कालं सूक्ष्मवाक्‌चित्तयोर्निग्रहं सर्वथा तत्संभवाभावं कुरुते. ततः सूक्ष्मे काययोगे क्षणं स्थितिं कृत्वा हि स्फुटं स केवली निजात्मानं सूक्ष्मक्रियं चिद्रूपं स्वयमात्मनैव विंदत्यनुभवतीति श्लोकचतुष्टयार्थः ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ अथ यदेव सूक्ष्मक्रियस्य वपुषः स्थैर्यं भवति, तदेव केवलिनां ध्यानं स्यादित्याह—

छद्मस्थस्य यथा ध्यानं । मनसः स्थैर्यमुच्यते ॥ तथैव वपुषः स्थैर्यं । ध्यानं केवलिनो

भवेत् ॥ १ ॥ व्याख्या—यथा येन प्रकारेण छद्मस्थस्य योगिनो मनसः स्थैर्यं ध्यानमुच्यते, तथैव तेन प्रकारेण वपुषः स्थैर्यं शरीरस्य निश्चलत्वं केवलिनो ध्यानं भवतीति ॥ १ ॥ अथ शैलेशीकरणारंभी सूक्ष्मकाययोगी यत्करोति तदाह—

शैलेशीकरणारंभी । वपुर्योगे स सूक्ष्मके ॥ तिष्ठन्नूर्ध्वास्पदं शीघ्रं । योगातीतं यियासति ॥ २ ॥ व्याख्या—केवलिनो ह्रस्वाक्षरपंचकोच्चारणमात्रायुषः शैलवन्निश्चलकायस्य चतुर्थध्यानपरिणतिरूपं शैलेशीकरणं भवति. ततः स केवली शैलेशीकरणारंभी शैलेशकरणारंभः सूक्ष्मके वपुर्योगे सूक्ष्मरूपे काययोगे तिष्ठन् शीघ्रं त्वरितमूर्ध्वास्पदं योगातीतमयोगिगुणस्थानं यियासति यातुमिच्छति ॥ २ ॥ अथ भगवान् स केवली सयोगिगुणस्थानांत्यसमये यत्करोति तदाह—

अस्योदयव्यवच्छेदात् । स्वप्रदेशघनत्वतः ॥ करोत्यंत्यांगसंस्थान–त्रिभागोनावगाहनं ॥

॥ ३ ॥ व्याख्या—अस्य सयोगिकेवलिगुणस्थानस्यांतेत्यसमये औदारिकमस्थिरद्विकं विहायोगतिद्विकं प्रत्येकत्रिकं संस्थानषट्कं अगुरुलघुचतुष्कं वर्णादिचतुष्कं निर्माणकर्म तैजस-

कार्मणद्वयं प्रथमं संहननं स्वरद्विकमेकतरं वेदनीयं चेति त्रिंशत्प्रकृतीनामुदयव्यवच्छेदो भवति. ततोऽत्रांगोपांगोदयव्यवच्छेदादंत्यांगसंस्थानावगाहनायाः सकाशात्त्रिभागोनावगाहनां करोति. कस्मात्? स्वप्रदेशघनत्वतः, चरमांगोपांगगतनाशिकादिछिद्राणां पूरणेन स्वप्रदेशानामात्मप्रदेशानां घनत्वं निबिडत्वं भवति, तस्मात्स्वप्रदेशघनत्वतस्त्रिभागोनत्वं भवतीति सयोगिगुणस्थानस्थो जीव एकविधबंधक उपांत्यसमयं यावत् ज्ञानांतरायदर्शनचतुष्कोदयव्यवच्छेदाद् द्विचत्वारिंशत्प्रकृतिवेदयिता, निद्राप्रचलाज्ञानांतरायदर्शनचतुष्करूपषोडशप्रकृतीनां सत्ताव्यवच्छेदात्पंचाशीतिसत्ताको भवति ॥ ३ ॥ अथायोगिगुणस्थानस्य स्थितिमाह—

अथायोगिगुणस्थाने । तिष्ठतोऽस्य जिनेशितुः ॥ लघुपंचाक्षरोच्चार–प्रमितैव स्थितिर्भवेत् ॥ ४ ॥ व्याख्या—अथ त्रयोदशगुणस्थानानंतरमयोगिगुणस्थानके चतुर्दशेऽस्य जिनेशितुर्जिनेंद्रस्य तिष्ठतोऽवस्थितस्य लघुपंचाक्षरोच्चारप्रमितैव 'अइउऋऌ' वर्णपंचकसमुच्चरणकालतुल्यैव स्थितिर्भवति ॥ ४ ॥ अथायोगिगुणस्थाने ध्यानमाह—

तत्रानिवृत्तिशब्दांतं । समुच्छिन्नक्रियात्मकं ॥ चतुर्थं भवति ध्यान–मयोगिपरमेष्ठिनः ॥

॥ ५ ॥ व्याख्या—तत्र तस्मिन्नयोगिगुणस्थानेऽयोगिपरमेष्ठिनश्चतुर्थं ध्यानं समुच्छिन्नक्रियात्मकं वक्ष्यमाणस्वरूपं भवति, कथंभूतं ? अनिवृत्तिशब्दांतं अनिवृत्तिशब्दोंते यस्य तत्समुच्छिन्नक्रियानिवृत्तिनामकं चतुर्थं ध्यानमिति ॥ ५ ॥ अथास्य चतुर्थध्यानस्य स्वरूपमाह—

समुच्छिन्ना क्रिया यत्र । सूक्ष्मयोगात्मिकापि हि ॥ समुच्छिन्नक्रियं प्रोक्तं । तद् द्वारं मुक्तिवेश्मनः ॥ ६ ॥ व्याख्या—यत्र ध्याने सूक्ष्मयोगात्मिकापि सूक्ष्मकाययोगरूपापि क्रिया समुच्छिन्ना सर्वथा निवृत्ता तत्समुच्छिन्नक्रियं नाम चतुर्थं ध्यानं प्रोक्तं. कथंभूतं ? मुक्तिवेश्मनः सिद्धिसौधस्य द्वारोपममिति ॥ ६ ॥ अथ शिष्येण कृतं प्रश्नद्वयमाह—

देहास्तित्वेऽस्त्ययोगित्वं । कथं तद्घटते प्रभो ॥ देहाभावे तथा ध्यानं । दुर्घटं घटते कथं ॥ ७ ॥ व्याख्या—शिष्यः पृच्छति, हे प्रभो ! देहास्तित्वे सूक्ष्मेऽपि वपुर्योगास्तित्वे योगित्वेऽयोगित्वमस्तीति तत्कथं घटते ? इत्येकः प्रश्नः. तथा चेद्यदि देहाभावः सर्वथा काययोगाभावः संजातस्तदा देहाभावे दुर्घटं ध्यानं कथं घटते ? इति द्वितीयः प्रश्नः ॥ ७ ॥ अथाचार्यः प्रश्नद्वयस्योत्तरं पद्यद्वयेनाह—

वपुषोऽत्रातिसूक्ष्मत्वा–च्छीघ्रंभाविक्रयत्वतः ॥ कायकार्यासमर्थत्वात् । सति कायेऽप्य-
योगता ॥ ८ ॥ तच्छरीराश्रयाद्ध्यान–मस्तीति न विरुध्यते ॥ निजशुद्धात्मचिद्रुप–निर्भरानंद-
शालिनः ॥ ९ ॥ व्याख्या—आचार्य आह—भो शिष्य! अत्रायोगिगुणस्थाने काये सूक्ष्मे
वपुर्योगे सत्यप्ययोगता प्रोच्यते. कस्मात्? वपुषः कायस्यातिसूक्ष्मक्रियारूपत्वादिति. तथा
शीघ्रंभाविक्रयत्वतः, क्रयस्य भावः क्रयत्वं, शीघ्रंभाविक्रयत्वं यस्य तच्छीघ्रंभाविक्रयत्वं, तस्मा-
त्तथाकार्याकार्यासमर्थत्वादेहकृत्यसाधनाक्षमत्वात् काये सत्यप्ययोगता भवतीति. तथा तच्छ-
रीराश्रयात्तादृग्देहास्तित्वाश्रयणात् ध्यानमस्तीति न विरुध्यते, न विरोधमाप्नोति, कस्य?
अयोगिगुणस्थानवर्त्तिनो भगवतः परमेष्ठिनः. कथंभूतस्य? निजशुद्धात्मचिद्रूपनिर्भरानंदशा-
लिनः, स्वकीयनिर्मलपरमात्मचिद्रूपतन्मयत्वोत्पन्ननिर्भरपरमानंदविराजमानस्येति. ॥ ९ ॥
अथ ध्यानस्य निश्चयव्यवहारत्वमाह—

आत्मानमात्मनात्मैव । ध्याता ध्यायति तत्वतः ॥ उपचारस्तदन्यो हि । व्यवहारनया-
श्रितः ॥ १० ॥ व्याख्या—तत्वतो निश्चयनयादात्मैव ध्याता आत्मनैव करणभूतेन कृत्वा

आत्मानमेव कर्मतापन्नं ध्यायति. हि स्फुटं अन्यो यः कश्चिदुपचारोऽष्टांगयोगप्रकृतिलक्षणः स सकलोऽपि व्यवहारनयाश्रितो ज्ञेयः ॥ १० ॥ अथायोगिन एवोपांत्यसमयकृत्यमाह—

चिद्रूपात्ममयोऽयोगी । ह्युपांत्यसमये द्रुतं ॥ युगपत्क्षपयेत्कर्म–प्रकृतीनां द्विसप्ततिं ॥ ॥ ११ ॥ व्याख्या—चिद्रूपात्ममयः केवलात्ममयोऽयोगी अयोगिगुणस्थानवर्त्ती हि स्फुटमुपांत्यसमये द्रुतं शीघ्रं युगपत्समकालं कर्मप्रकृतीनां द्विसप्ततिं क्षपयेत्क्षयं प्रापयेदिति ॥११॥ अथ ता द्विसप्ततिकर्मप्रकृतीर्नामतः श्लोकपंचकेनाह—

देहबंधनसंघाताः । प्रत्येकं पंच पंच च ॥ अंगोपांगत्रयं चैव । षट्कं संस्थानसंज्ञकं ॥ १२ ॥ वर्णाः पंच रसाः पंच । षट्कं संहननात्मकं ॥ स्पर्शाष्टकं च गंधौ द्वौ । नीचानादेयदुर्भगं ॥ १३ ॥ तथागुरुलघुत्वाख्य–मुपघातोऽन्यथा ततः ॥ निर्माणमपर्याप्त–मुच्छ्वासश्चायशस्तथा ॥ १४ ॥ विहायोगतियुग्मं च । शुभास्थैर्यद्वयं पृथक् ॥ गतिर्दिव्यानुपूर्वी च प्रत्येकं च स्वरद्वयं ॥ १५ ॥ वेद्यमेकतरं चेति । कर्मप्रकृतयः खलु ॥ द्वासप्ततिरिमा मुक्ति–पुरीद्वारार्गलोपमाः ॥ १६ ॥ व्याख्या—देहपंचकं ५ बंधनपंचकं १० संघातनपंचकं १५ अं-

गोपांगत्रयं १८ संस्थानषट्कं २४ वर्णपंचकं २९ रसपंचकं ३४ संहननषट्कं ४० स्पर्शाष्टकं ४८ गंधद्वयं ५० नीचैर्गोत्रं ५१ अनादेयं ५२ दुर्भगत्वं ५३ अगुरुलघुत्वं ५४ उपघातत्वं ५५ पराघातत्वं ५६ निर्माणत्वं ५७ अपर्याप्तत्वं ५८ उच्छ्वासत्वं ५९ अयशस्त्वं ६० विहायोगतिद्वयं ६२ शुभाशुभद्वयं ६४ स्थैर्यास्थैर्यद्वयं ६६ देवगति ६७ देवानुपूर्वी ६८ प्रत्येकनाम ६९ सुस्वरदुःस्वरद्वयं ७१. एकतरं वेद्यं ७२ चेति द्वासप्ततिकर्मप्रकृतयो मुक्तिपुरीद्वारार्गलारूपा उपान्त्ये समये क्षपयति. ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ अथायोगान्त्ये समये याः प्रकृतीः क्षपयित्वा यत्करोति तत् श्लोकत्रयेणाह—

अंत्यं ह्येकतरं वेद्य–मादेयत्वं च पूर्णतां ॥ त्रसत्वं बादरत्वं हि । मनुष्यायुश्च सद्यशः ॥ १७ ॥नृगतिं चानुपूर्वीं च । सौभाग्यं चोच्चगोत्रतां ॥ पंचाक्षत्वं तथा तीर्थ–कृत्तामिति त्रयोदश ॥ १८ ॥ क्षयं नीत्वा स लोकांतं । तत्रैव समये व्रजेत् ॥ लब्धसिद्धत्वपर्यायः । परमेष्ठी सनातनः ॥ १९ ॥ व्याख्या—सयोगी हि स्फुटमंत्यसमये एकतरं वेद्यं १ आदेयत्वं २ पर्याप्तत्वं ३ त्रसत्वं ४ बादरत्वं ५ मनुष्यायुः ६ सद्यशः ७ मनुष्यगतिं ८ मनुष्यानुपूर्वीं

९ सौभाग्यं १० उच्चैर्गोत्रं ११ पंचेंद्रियजातिं १२ तीर्थकृन्नामेति १३ त्रयोदशप्रकृतीः क्षयं नीत्वा तत्रैव समये लब्धसिद्धत्वपर्यायः प्राप्तसिद्धत्वनामा परमेष्ठी सनातनः स ततो भगवान् लोकांतं लोकपर्यंतं व्रजेद्गच्छेदिति.

तथायोगिगुणस्थानस्थो जीवो बंधकस्तथैकनरवेद्य १ आदेय २ यशः ३ सुभग ४ त्रसत्रिक ७ पंचेंद्रियत्व ८ मनुष्यगति ९ मनुष्यानुपूर्वी १० मनुष्यायुः ११ उच्चैर्गोत्र १२ तीर्थकृदिति १३ त्रयोदशप्रकृतिवेदयिता, अन्यसमयद्वयादर्शकपंचाशीतिसत्ताक उपांत्ये समये त्रयोदशप्रकृतिसत्ताकोंत्यसमयेऽसत्ताकः ॥ १८ ॥ १९ ॥ इत्ययोगिनश्चतुर्दशं ॥ निःकर्मात्मा तस्मिन्नेव समये लोकांतं कथं यातीत्याशंक्याह—

पूर्वप्रयोगतोऽसंग–भावाद्बंधविमोक्षतः ॥ स्वभावपरिणामाच्च । सिद्धस्योर्ध्वगतिर्भवेत् ॥ ३० ॥ व्याख्या—सिद्धस्य निःकर्मात्मन ऊर्ध्वगतिर्भवति. कस्मात्? पूर्वप्रयोगतोऽचिंत्यात्मवीर्येणोपांत्यसमयद्वये पंचाशीतिकर्मप्रकृतिक्षपणाय पूर्वं यः प्रयुक्तः प्रयोगो व्यापारः प्रयत्नस्तस्मादित्येको हेतुः. न संगोऽसंगस्तस्य भावोऽसंगभावस्तस्मात्, कर्मोपग्रहरूपसंगमा-

न्नावात्, इति द्वितीयो हेतुः. बंधाद्विमोक्षो बंधविमोक्षस्तस्माद्गाढतरबंधनविमुक्तितः, इति तृतीयो हेतुः. स्वन्नावेन परिणमनं स्वन्नावपरिणामस्तस्मात्तथा स्वान्नाव्यादिति चतुर्थो हेतुः ॥ २० ॥ अथेति हेतुचतुष्टयं सदृष्टांतं क्रमेण श्लोकचतुष्टयेनाह—

कुलालचक्रदोलेषु—मुख्यानां हि यथागतिः ॥ पूर्वप्रयोगतः सिद्धा । सिद्धस्योर्ध्वगतिस्तथा ॥ २१ मृल्लेपसंगतिमोक्षा—यथा दृष्टाप्स्वलांबुनः ॥ कर्मसंगविनिर्मोक्षा—तथा सिद्धगतिः स्मृता ॥ २२ ॥ एरंडफलबीजादे—र्बंधछेदाद्यथा गतिः ॥ कर्मबंधनविछेदात् । सिद्धस्यापि तथेक्ष्यते ॥ २३ ॥ यथाधस्तिर्यगूर्ध्वं च । लेष्टुवाय्वग्निवीचयः ॥ स्वन्नावतः प्रवर्त्तंते । तथोर्ध्वगतिरात्मनः ॥ २४ ॥ व्याख्या—कुलालचक्रं कुंन्नकारोपकरणं, दोला प्रेंखा, इषुर्बाणस्तन्मुख्यानां यंत्रगोफणमुक्तगोलकादीनां गतिर्हि स्फुटं यथा येन प्रकारेण पूर्वप्रयोगतः सिद्धा प्रसिद्धा, तथा तेन प्रकारेण पूर्वप्रयोगतः सिद्धस्योर्ध्वगतिः सिद्धेत्येको दृष्टांतः. तथा मृल्लेपनिर्मोक्षान्मृत्तिकाप्रलेपसंगतिमुक्तेरप्सु जलेष्वलांबुनस्तुंबकफलस्य यथोर्ध्वगतिर्दृष्टा, तथा कर्मलेपसंगतिमोक्षात्सिद्धानामूर्ध्वगतिः स्मृतेति द्वितीयहेतुदृष्टांतः. तथा एरंडफलबी-

जादेरेरंडफलबीजस्य, आदिशब्दाच्चणबीजादेर्बंधच्छेदाद्यथोर्ध्वगतिर्भवेत्, कर्मबंधनविच्छेदात्सि-
द्धस्यापि तथैवोर्ध्वगतिर्भवतीति तृतीयहेतुदृष्टांतः. तथा लेष्टुवाय्वग्निवीचय इष्टकाखंडसमी-
रणवह्नयः स्वभावत एव यथाधस्तिर्यगूर्ध्वं क्रमेण प्रवर्त्तते, तथात्मनोऽपि स्वभावादेवोर्ध्व-
गतिर्भवतीति चतुर्थहेतुदृष्टांतः ॥२१॥ अथाधस्तिर्यग्लोकेषु निःकर्मात्मनो गतिनिषेधमाह—

न चाधो गौरवाभावा–न्न तिर्यक् प्रेरकं विना ॥ न च धर्मास्तिकायस्या–ऽभावाल्लोको-
परि व्रजेत् ॥ २२ ॥ व्याख्या—सिद्धात्माधस्तान्न गच्छति. कस्मात्? गौरवाऽभावात्, कर्म-
जनितगुरुत्वाभावात्. तथा प्रेरकं विना प्रेरककर्माभावान्न तिर्यग् गच्छति. तथा निःकर्मा लो-
कोपरि न व्रजेदलोकमध्ये न गच्छेत्. कस्मात्? धर्मास्तिकायस्याऽभावात्. लोके हि जीवपु-
द्गलयोर्गतिहेतुर्धर्मास्तिकायो भवति, मत्स्यादीनां सलिलवत्, तस्य धर्मास्तिकायस्याऽलोके-
ऽसंभवात् सिद्धात्मालोकोपरि न व्रजेदिति. ॥ २३ ॥ अथ सिद्धानां स्थितिर्यथा सिद्धिशिलो-
परि लोकांतेऽस्ति तथा श्लोकद्वयेनाह—

मनोज्ञा सुरभिस्तन्वी । पुण्या परमभासुरा ॥ प्राग्भारा नाम वसुधा । लोकमूर्ध्नि व्य-

वस्थिता ॥ २४ ॥ नृलोकतुल्यविष्कंभा । सितछत्रनिभाशुभा ॥ ऊर्ध्वं तस्याः क्षितेः सिद्धा । लोकांते समवस्थिताः ॥ २५ ॥ व्याख्या—प्राग्भारानाम वसुधा सिद्धिशिलेति ख्याता पृथ्वी लोकमूर्ध्नि चतुर्दशरज्ज्वात्मकलोकशिरसि व्यवस्थिता वर्त्तते. तस्याः क्षितेरूर्ध्वं लोकांते लोकप्रांते स्पृष्टात्मप्रदेशाः सिद्धाः समवस्थिता भवंति. कथंभूता क्षितिः? मनोज्ञा मनोहारिणी, पुनः कथंभूता? सुरभिः कर्पूरपूराधिकसौरभ्या, तन्वी सूक्ष्मावयवत्वात्कोमला, न तु स्थूलावयवत्वात्कर्कशा, पुण्या पवित्रा, परमभासुरा प्रकृष्टतेजोभासुरा, नृलोकतुल्यविष्कंभा मनुष्यक्षेत्रसमविस्तारा, सितछत्रनिभा श्वेतछत्राकारा, परमुत्तानछत्रोपमा, शुभा सकलशुभोदयमयीति, सा प्राग्भारा वसुधा सर्वार्थसिद्धाद् द्वादशभिर्योजनैर्भवति, मध्यदेशे साष्टयोजना, प्रांतेषु तीक्ष्णधारोपमा.

तस्याः शिलाया उपरि एकेन योजनेन लोकांतं, तस्य योजनस्य यश्चतुर्थः कोशस्तस्य षष्टे भागे सिद्धानामवगाहना भवति. यदाह—ईसीपब्भाराए उवरिं । खलु जोयणंमि जो कोसो । कोसस्सय छप्भाए सिद्धाणोगाहणा भणिया ॥ १ ॥ तथाहि—सिद्धेः सहस्रधनुःप्र-

माणस्य क्रोशस्य षष्टे न्नागे धनुषां त्रीणि शतानि त्रयस्त्रिंशदधिकानि न्नवंति, धनुस्त्रिन्नागद्वयं च. तत न्नत्कृष्टतः सिद्धात्मप्रदेशानामवगाहनाप्येतावत्येव न्नवति नाधिकेति. यदाह—

तिन्नेव धणुसयाइं । धणुहतित्तीसं च धणुतिन्नागोणं १ इअ्रससा न्नक्कोसा । सिद्धाणोगाहणा न्नणिया ॥ २५ ॥ अथ सिद्धात्मप्रदेशानामवगाहनाकारमाह—

कालावसरसंस्थाना:। या मूषागतसिक्थका ॥ तत्रस्थाकाशसंकाशा–कारा सिद्धावगाहना ॥ २६ ॥ व्याख्या—या मूषागतसिक्थका गलितमदना कालावसरसंस्थानांतकालसमयाकारा न्नवति. तत्रस्थो य आकाशस्तत्संकाशाकारा गलितमदनमूषागताकाशसदृक्षाकृतिः सिद्धानामवगाहना न्नवतीति. ॥ २६ ॥ अथ सिद्धानां ज्ञानदर्शनविषयमाह—

ज्ञातारोऽखिलतत्वानां । दृष्टारश्चैकहेलया ॥ गुणपर्याययुक्तानां । त्रैलोक्योदरवर्त्तिनां ॥ २७ ॥ व्याख्या—त्रैलोक्योदरवर्त्तिनां चतुर्दशरज्ज्वात्मकलोकमध्यवर्त्तमानानां गुणपर्याययुक्तानां पूर्वोक्तानां पूर्वोक्तस्वरूपैर्गुणैः पर्यायैश्चोपलक्षितानां अखिलतत्वानां समस्तजीवाजीव विहितपदार्थानां ते ज्ञातारो न्नवंति, विशेषोपयोगतया परिच्छेदका न्नवंति. न केवलं ज्ञातारः,

समयांतरमेकहेलया सामान्योपयोगतया द्रष्टारश्च भवंति ॥ २७ ॥ अथ सिद्धानां गुणाष्टकं सहेतुकं श्लोकत्रयेणाह—

अनंतं केवलं ज्ञानं । ज्ञानावरणसंक्षयात् ॥ अनंतं दर्शनं चैव । दर्शनावरणक्षयात् ॥ ॥ २८ ॥ शुद्धसम्यक्त्वचारित्रे । क्षायिके मोहनिग्रहात् ॥ अनंते सुखवीर्ये च । वेद्यविघ्नक्षयात्क्रमात् ॥ २९ ॥ आयुषः क्षीणभावत्वात् । सिद्धानामक्षया स्थितिः ॥ नामगोत्रक्षयादेवा—मूर्तानंतावगाहना ॥ ३० ॥ व्याख्या—सिद्धानामनंतं केवलं ज्ञानं भवति, कस्मात्? अज्ञानावरणसंक्षयात्. अनंतं दर्शनं चापि भवति, कस्मात्? दर्शनावरणक्षयात्. सिद्धानां शुद्धसम्यक्त्वचारित्रे भवतः, कथंभूते? क्षायिके, कस्मान्मोहनिग्रहात्, दर्शनमोहनीययोः क्षीणत्वात्. अनंते सुखवीर्ये च भवतः, कस्मात्? वेद्यविघ्नक्षयात्, वेद्यक्षयादनंतं सुखं, विघ्नक्षयादनंतं वीर्यमित्यर्थः. सिद्धानामक्षया स्थितिर्भवति, कस्मात्? आयुषः क्षीणभावत्वात्. मूर्तत्वेनानंतानामवगाहो मूर्तानंतावगाहना, तस्याऽभावोऽमूर्तानंतावगाहना. सिद्धानाममूर्तानंतावगाहना भवति, कस्मात्? नामगोत्रक्षयादेवेति ॥ २८ ॥ २९ ॥ ३० ॥ अथ सिद्धानां य-

त्सौख्यं तदाह—

यत्सौख्यं चक्रिशक्रादि-पदवीभोगसंभवं ॥ ततोऽनंतगुणं तेषां । सिद्धावक्लेशमव्ययं ॥
॥ ११ ॥ व्याख्या—चक्रिशक्रादिपदवीभोगसंभवं यत्सौख्यमुत्कृष्टं वर्ण्यते, ततोऽपि तेषां सिद्धानामनंतगुणं भवति. क्व? सिद्धौ मुक्तौ. कथंभूतं सौख्यं? अक्लेशं, अविद्यास्मितरागद्वेषाभिनिवेशाः क्लेशास्ते न विद्यंते यत्र तदक्लेशं. पुनः कथंभूतं? अव्ययं, न व्येति, न चलति स्वस्वभावादिति अव्ययमक्षयमित्यर्थः ॥ ११ ॥ अथ तैः सिद्धैर्भगवद्भिर्यत्प्राप्तं तत्सारमाह—

यदाराध्यं च यत्साध्यं । यद् ध्येयं यच्च दुर्लभं ॥ चिदानंदमयं तत्तैः । संप्राप्तं परमं पदं ॥ १२ ॥ तैः सिद्धैर्भगवद्भिस्तत्परमं पदं प्राप्तं, तत्किं? यदाराध्यं आराधकैर्यत्पदं समाराध्यते. तथा यत्साध्यं साधकैः पुरुषैः सम्यग्ज्ञानदर्शनचारित्रादिभिः कृत्वा यत्साध्यते. यद्ध्येयं ध्यायकैर्योगिभिर्यत्सदैव नानाविधध्यानोपायैर्ध्यायते. तथा यच्च दुर्लभं यत्पदमभव्यानां सर्वथा दुर्लभं, भव्यानामपि केषांचिदप्राप्तसामग्रीविशेषाणां सर्वथा दुर्लभं, दूरभव्यानां तु कष्टलभ्यमित्येवं दुर्लभं, तदपि तैर्धन्यैर्भगवद्भिः सिद्धैर्लब्धमिति. कथंभूतं तत्परमं पदं?

चिदानंदमयं चिद्रूपपरमानंदमयमिति. ॥ १२ ॥ अथ मुक्तेः स्वरूपं वृद्दवृत्तेनाह—

नात्यंताभावरूपा न च जडिममयी व्योमवद्व्यापिनी नो। न व्यावृत्तिं दधाना विषयसुखघना नेष्यते सर्वविद्भिः ॥ सद्रूपात्मप्रसादाद् दृगवगमगुणौघेन संसारसारा। निःसीमात्यक्षसौख्योदयवसतिरनिःपातिनी मुक्तिरुक्ता ॥ ११ ॥ व्याख्या—मुक्तिः कैश्चिदत्यंताभावरूपा मन्यते, अन्यैर्जडिममयी ज्ञानाभावमयी मन्यते, अपरैर्व्योमवद्व्यापिनी मन्यते, एकैर्व्यावृत्तिं पुनरावृत्तिं दधाना मन्यते, अपरैः क्लिष्टकर्मभिर्विषयसुखघना विषयसुखमयी मुक्तिरुच्यते. सर्वविद्भिस्तु श्रीसर्वज्ञैरभावरूपा जडिममयी व्योमव्यापिनी व्यावृत्तिरूपा विषयसुख मयी वा मुक्तिर्नेष्यते. किंतु सद्रूपात्मप्रसादाद्विद्यमानचिद्रूपात्मप्रसत्तितो दृगवगमगुणौघेन सम्यग्दर्शनज्ञानगुणसमूहेन कृत्वाऽसारभूतसंसारात्सारभूता, निस्सीमात्यक्षसौख्योदयवसतिरनंतातींद्रियानंदानुभवस्थाना, अनिःपातिनी निःपातरहिता मुक्तिः सिद्धिरुक्ता गदितेति. ॥ १ ॥ अथ पूर्वर्षिरचितवहुशास्त्रेभ्यो गुणस्थानार्थसंगतश्लोकसंग्रहेण प्रकरणोद्धारमाह—

इत्युद्धृतो गुणस्थान–रत्नराशिः श्रुतार्णवात् ॥ पूर्वर्षिसूक्तिनावैव। रत्नशेखरसूरिभिः ॥

॥ ३४ ॥ व्याख्या—इति पूर्वोक्तप्रकारेणोद्धृतः प्रकटीकृतः कर्मतापन्नो गुणस्थानरत्नराशिः, गुणस्थानान्येव रत्नानि गुणस्थानरत्नानि, तेषां राशिर्गुणस्थानरत्नराशिः. कस्मात्? श्रुतार्णवादागमरत्नाकरात्, कयैव कृत्वा? पूर्वर्षिसूक्तिनावेव, पूर्वर्षीणां सूक्तिः शोभनोक्तिः पद्यरचना, सैव नौस्तया, पूर्वर्षिसूक्तिनावैव कृत्वा, नत्वात्मकृतैः श्लोकैः, प्रायः पूर्वर्षिरचितैरेवेत्यर्थः. कैरुद्धृतः? रत्नशेखरसूरिभिर्बृहद्गच्छीयश्रीवज्रसेनसूरिशिष्यैः श्रीहेमतिलकसूरिपट्टप्रतिष्ठितैः श्रीरत्नशेखरसूरिभिः स्वपरोपकाराय प्रकरणरूपतया प्रकटित इत्यर्थः ॥ १३४ ॥ आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदयछापखानामां छापी प्रसिद्ध कर्यो छे.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

॥ इति श्रीगुणस्थानक्रमारोहवृत्तिः समाप्ता ॥

**खंधप्पएसा परमाणुपोग्गला, ते समासतो पंचविहा पण्णत्ता, तंजहा—वण्णपरिणया गंध० रस० फास० संठाणपरिणया, एवं ते ५ जहा पण्णवणाए, सेत्तं रूविअजीवाभिगमे, सेत्तं अजीवाभिगमे (सू० ५)**

अथ कोऽसौ अजीवाभिगमः ?, सूरिराह—अजीवाभिगमो द्विविधः प्रज्ञप्त , तद्यथा—रूप्यजीवाभिगमोऽरूप्यजीवाभिगमश्च, रूपमेषामस्तीति रूपिणः, रूपग्रहणं गन्धादीनामुपलक्षणं, तद्व्यतिरेकेण तस्यासम्भवात्, तथाहि—प्रतिपरमाणु रूपरसगन्धस्पर्शाः, उक्तं च —"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः । एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥ १ ॥" एतेन यदुच्यते कैश्चित् 'भिन्ना एव रूपपरमाणवो भिन्नाश्च पृथक् पृथग् रसादिपरमाणव' इति, तदपास्तमवसेयं, प्रत्यक्षबाधितत्वात्, तथाहि—य एव नैरन्तर्येण कुचकलशोपरिनिविष्टा रूपपरमाणव उपलब्धिगोचरास्तेष्वेवाऽव्यवच्छेदेन सकलेष्वपि स्पर्शोऽप्युपलभ्यते, य एव च घृतादिरसपरमाणवः कर्पूरादिगन्धपरमाणवो वा तेष्वेव नैरन्तर्येण रूपं स्पर्शश्चोपलब्धिविषयः, अन्यथा सान्तरा रूपादयः प्रतीतिपथमियियुः, न च सान्तराः प्रतीयन्ते, तस्मादव्यतिरेक. परस्परं रूपादीनामिति, रूपिणश्च तेऽजीवाश्च रूप्यजीवास्तेषामभिगमो रूप्यजीवाभिगमः पुद्गलरूपाजीवाभिगम इतियावत्, पुद्गलानामेव रूपादिमत्त्वात्, रूपव्यतिरिक्ता अरूपिणो—धर्मास्तिकायादयस्ते च तेऽजीवाश्चारूप्यजीवास्तेषामभिगमोऽरूप्यजीवाभिगमः ॥३॥ तत्रारूपिणः प्रत्यक्षाद्यविषया. केवलमागमप्रमाणगम्यास्तत्त्वत इति प्रथमतस्तद्विषयं प्रश्नसूत्रमाह—सुगमं, सूरिराह—'अरुवी'त्यादि ॥ अरूप्यजीवाभिगमः 'दशविधः' दशप्रकारः प्रज्ञप्तः, तदेव दशविधत्वमाह—तंजहेत्यादि, 'तद्यथे'ति वक्ष्यमाणभेदकथनोपन्यासार्थः, धर्मास्तिकायः, 'एवं जहा पण्णवणाए' इति 'एवम्' उक्तेन प्रकारेण यथा **प्रज्ञापनायां** तथा

वक्तव्यं तावद् यावत् 'सेत्तं असंसारसमापन्नजीवाभिगमे' इति, तच्चैवम्——"धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पएसा अधम्मत्थिकाए अधम्मत्थिकायस्स देसे अधम्मत्थिकायस्स पएसा आगासत्थिकाए आगासत्थिकायस्स देसे आगासत्थिकायस्स पएसा अद्धासमये" इति, तत्र जीवानां पुद्गलानां च स्वभावत एव गतिपरिणामपरिणतानां तत्स्वभावधारणात्पोषणाद्धर्मः अस्तयः—प्रदेशास्तेषां कायः—सङ्घातः "गण काए य निकाए खंधे वग्गे तहेव रासी य" इति वचनात् अस्तिकायः—प्रदेशसङ्घात इत्यर्थः, धर्मश्चासावस्तिकायश्च धर्मास्तिकायः, अनेन सकलधर्मास्तिकायरूपमवयविद्रव्यमाह, अवयवी च नाम अवयवानां तथारूपः सङ्घातपरिणामविशेष एव, न पुनरवयवद्रव्येभ्यः पृथगर्थान्तरद्रव्यं, तस्यानुपलम्भात्, तन्तव एव हि आतानवितानरूपसङ्घातपरिणामविशेषमापन्ना लोके पटव्यपदेशभाज उपलभ्यन्ते, न तदतिरिक्तं पटाख्यं नाम द्रव्यम्, उक्तं चान्यैरपि——"तन्त्वादिव्यतिरेकेण, न पटाद्युपलम्भनम्। तन्त्वादयोऽविशिष्टा हि, पटादिव्यपदेशिनः ॥ १ ॥" कृतं प्रसङ्गेन, अन्यत्र **धर्मसङ्ग्रहणिटीकादावेतद्वादस्य** चर्चितत्वात्, तथा तस्यैव बुद्धिपरिकल्पितो द्व्यादिप्रदेशात्मको विभागो धर्मास्तिकायस्य देशः, धर्मास्तिकायस्य प्रदेशाः—प्रकृष्टा देशाः प्रदेशाः, प्रदेशा निर्विभागा भागा इति, ते चासङ्ख्येयाः, लोकाकाशप्रदेशप्रमाणत्वात्तेषाम्, अत एव वहुवचनं, धर्मास्तिकायप्रतिपक्षभूतोऽधर्मास्तिकायः, किमुक्तं भवति ?—जीवानां पुद्गलानां च स्थितिपरिणामपरिणतानां तत्परिणामोपष्टम्भकोऽमूर्त्तोऽसङ्ख्यातप्रदेशात्मकोऽधर्मास्तिकायः, अधर्मास्तिकायस्य देश इत्यादि पूर्ववत्, तथा आ—समन्तात्सर्वाण्यपि द्रव्याणि काशन्ते—दीप्यन्तेऽत्र व्यवस्थितानीत्याकाशम्, अस्तयः—प्रदेशास्तेषां कायोऽस्तिकायः, आकाशं च तदस्तिकायश्चाकाशास्तिकायः, आकाशास्तिकायस्य देश इत्यादि प्राग्वत्, नवरमस्य प्रदेशा अनन्ताः, अलोकस्यानन्तत्वात्, 'अद्धासमय' इति, अद्धेति कालस्याख्या, अद्धा चासौ समयश्चाद्धासमयः, अथवाऽद्धायाः समयो—

निर्विभागो भागोऽद्धासमयः, अयं चैक एव वर्त्तमानः परमार्थतः सन् नातीतानागताः, तेषां यथाक्रमं विनष्टानुत्पन्नत्वात्, ततः कायत्वाभावादेशप्रदेशकल्पनाविरहः, अथाकाशकालौ लोकेऽपि प्रतीतावितित तौ श्रद्धातुं शक्येते, धर्माधर्मास्तिकायौ तु कथं प्रत्येतव्यौ ? येन तद्विषया श्रद्धा भवेत्, उच्यते, गतिस्थितिकार्यदर्शनात्, तथाहि—यद् यदन्वयव्यतिरेकानुविधायि तत्तद्धेतुकमिति व्यवहर्त्तव्यं, यथा चक्षुरिन्द्रियान्वयव्यतिरेकानुविधायि चाक्षुषं विज्ञानं, तथा च जीवानां पुद्गलानां च गतिस्थितिपरिणामपरिणतानामपि गतिस्थिती यथाक्रमं धर्माधर्मास्तिकायान्वयव्यतिरेकानुविधायिन्यौ, तस्मात्ते तद्धेतुके, न चायमसिद्धो हेतुः, तथाहि—जीवानां पुद्गलानां च गतिस्थितिपरिणामपरिणतानामपि गतिस्थिती न तत्परिणमनमात्रहेतुके, तन्मात्रहेतुकतायामलोकेऽपि तत्प्रसक्तेः, अथ न तत्परिणमनमात्रं हेतुः किन्तु विशिष्टः परिणामः, स चेत्थंभूतो यथा लोकमात्रक्षेत्रस्यान्तरेऽत्र गतिस्थितिभ्यां भवितव्यं न बहिः प्रदेशमात्रमप्यधिकं, ननु स एवेत्थम्भूतो विशिष्टपरिणाम आकालं जीवानां पुद्गलानां चोत्कर्षतोऽप्येतावत्प्रमाण एवाभूद् भवति भविष्यति वा न तु कदाचनाप्यधिकतर इत्यत्र किं नियामकं ?, यथा हि किल परमाणोर्जघन्यतः परमाणुमात्रक्षेत्रातिक्रममादिं कृत्वोत्कर्षतश्चतुर्दशरज्ज्वात्मकमपि क्षेत्रं यावद् गतिरुपजायते तथा परतोऽपि प्रदेशमात्रमप्यधिका किं न भवति ?, तस्मादवश्यमत्र किञ्चिन्नियामकमपरं वक्तव्यं, तच्च धर्माधर्मास्तिकायावेव नाकाशमात्रम्, आकाशमात्रस्यालोकेऽपि सम्भवात्, नापि लोकपरिमितमाकाशम्, इतरेतराश्रयदोषप्रसङ्गात्, तथाहि—जीवाना पुद्गलानां चान्यत्र गतिस्थित्योरभावे सिद्धे सति विवक्षितस्य परिमितस्याकाशस्य लोकत्वसिद्धिः, तत्सिद्धौ चान्यत्र जीवपुद्गलानां गतिस्थित्यभावसिद्धिरित्येकाभावेऽन्यतरस्याप्यभावः, अथ किमिदमसंवद्धमुच्यते ?, यत् लोकत्वेन सम्प्रति व्यवह्रियते क्षेत्रं, तावन्मात्रस्यैवाकाशखण्डस्य गतिस्थित्युपष्टम्भकस्वभावो न परस्य प्रदेशमात्रस्यापि ततो न कश्चिद्दोषः, ननु तावन्मात्रस्यैवाकाशस्य

स स्वभावो न परस्य प्रदेशमात्रस्यापीत्यत्रापि सुधियः कारणान्तरं मृगयन्ते, आकाशत्वमात्रस्योभयत्रापि तुल्यत्वात्, विशेषणमन्तरेण च वैशिष्ट्यायोगात्, कारणान्तरं धर्माधर्मास्तिकायभावाभाववेव नापरमिति स्थितम्, अन्यच्च—तावन्मात्रस्याकाशखण्डस्य स स्वभावो न परस्येत्यपि कुतः प्रमाणात्परिकल्प्यते?, आगमप्रमाणादिति चेत् तथाहि—तावत्येवाकाशखण्डे जीवानां च पुद्गलानां च गतिस्थितिमतां गतिस्थिती तत्र तत्र व्यावर्ण्येते न परत इति, यद्येवं तर्ह्यागमप्रामाण्यबलादेव धर्माधर्मास्तिकायावपि गतिस्थितिनिबन्धनमिष्येयातां किमाकाशखण्डस्य निर्मूलस्वभावान्तरपरिकल्पनाऽऽयासेनेति कृतं प्रसङ्गेन। अथामीपामित्थं क्रमोपन्यासे किं प्रयोजनम्?, उच्यते, इह धर्मास्तिकाय इति पदं मङ्गलभूतम्, आदौ धर्मशब्दान्वितत्वात्, पदार्थप्ररूपणा च सम्प्रत्युत्क्षिप्ता वर्त्तते, ततो मङ्गलार्थमादौ धर्मास्तिकायस्योपादानं, धर्मास्तिकायप्रतिपक्षभूतश्चाधर्मास्तिकाय इति तदनन्तरमधर्मास्तिकायस्य, द्वयोरपि चानयोराधारभूतमाकाशमिति तदनन्तरमाकाशास्तिकायस्य, ततः पुनरजीवसाधर्म्याद्द्धासमयस्य, अथवा इह धर्माधर्मास्तिकायौ विभू न भवतः, तद्विभुत्वेन तत्सामर्थ्यतो जीवपुद्गलानामस्खलितप्रचारप्रवृत्तेर्लोकव्यवस्थाऽनुपपत्तेः, अस्ति च लोकालोकव्यवस्था, तत एतावविभू सन्तौ यत्र क्षेत्रे समवगाढौ तावत्प्रमाणो लोकः, शेषस्त्वलोक इति सिद्धम्, उक्तं च—"धर्माधर्मविभुत्वात्सर्वत्र च जीवपुद्गलविचारात्। नालोकः कश्चित्स्यान्न च संमतमेतदार्याणाम्॥ १॥ तस्माद्धर्माधर्मावंवगाढौ व्याप्य लोकखं सर्वम्। एवं हि परिच्छिन्नः सिद्ध्यति लोकस्तदविभुत्वात्॥ २॥" तत एवं लोकालोकव्यवस्थाहेतू धर्माधर्मास्तिकायावित्यनयोरादावुपादानं, तत्रापि माङ्गलिकत्वात् प्रथमतो धर्मास्तिकायस्य, तत्प्रतिपक्षत्वात् ततोऽधर्मास्तिकायस्य, ततो लोकालोकव्यापित्वादाकाशास्तिकायस्य, तदनन्तरं लोके समयासमयक्षेत्रव्यवस्थाकारित्वादद्धासमयस्य, एवमागमानुसारेणान्यदपि युक्त्यनुपाति वक्तव्यमित्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, अत्रोपसंहारवाक्यं—'सेत्तं अरूविअजीवाभि-

गमे'। अत ऊर्द्धमिदं सूत्रम्—'से किं तं रूविअजीवाभिगमे ?, रूविअजीवाभिगमे चउव्विहे पण्णत्ते, तं०—खंधा खंधदेसा खंधपएसा परमाणुपुग्गला' इह स्कन्धा इत्यत्र बहुवचनं पुद्गलस्कन्धानामनन्तत्वख्यापनार्थं, तथा चोक्तम्—"दव्वतो णं पुग्गलत्थिकाए णं अनन्ते" इत्यादि, 'स्कन्धदेशाः' स्कन्धानामेव स्कन्धत्वपरिणाममजहतां बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका विभागाः, अत्रापि बहुवचनमनन्तप्रदेशिकेषु स्कन्धेषु स्कन्धदेशानन्तत्वसंभावनार्थं, 'स्कन्धप्रदेशाः' स्कन्धानां स्कन्धत्वपरिणाममजहतां प्रकृष्टा देशाः—निर्विभागा भागाः परमाणव इत्यर्थः, 'परमाणुपुद्गलाः' स्कन्धत्वपरिणामरहिताः केवलाः परमाणवः॥ अत ऊर्द्धं सूत्रमिदम्—'ते समासतो पंचविधा पन्नत्ता, तंजहा—वण्णपरिणया गंधपरिणता रसपरिणता फासपरिणता संठाणपरिणता, तत्थ णं जे वण्णपरिणया ते पंचविहा पन्नत्ता, तंजहा—कालवण्णपरिणता नीलवण्णपरिणता इत्यादि तावद् यावत् 'सेत्तं रूविअजीवाभिगमे, सेत्तं अजीवाभिगमे॥

से किं तं जीवाभिगमे ?, जीवाभिगमे दुविहे पण्णत्ते, तंजहा—संसारसमावण्णगजीवाभिगमे य असंसारसमावण्णगजीवाभिगमे य (सू० ६) से किं तं असंसारसमावण्णगजीवाभिगमे ?, २ दुविहे पण्णत्ते, तंजहा—अणंतरसिद्धासंसारसमावण्णगजीवाभिगमे य परंपरसिद्धासंसारसमावण्णगजीवाभिगमे य। से किं तं अणंतरसिद्धासंसारसमावण्णगजीवाभिगमे ?, २ पण्णरसविहे पण्णत्ते, तंजहा—तित्थसिद्धा जाव अणेगसिद्धा, सेत्तं अणंतरसिद्धा। से किं तं परंपरसिद्धासंसारसमावण्णगजीवाभिगमे ?, २ अणेगविहे पण्णत्ते, तंजहा—पढमसमयसिद्धा दुसमय-

**सिद्धा जाव अणंतसमयसिद्धा, से तं परंपरसिद्धासंसारसमावण्णगजीवाभिगमे, सेत्तं असंसारसमावण्णगजीवाभिगमे (सू० ७)**

संसरणं संसारो—नारकतिर्यङ्नरामरभवभ्रमणलक्षणस्तं सम्यग्—एकीभावेनापन्नाः—प्राप्ताः संसारसमापन्नाः—संसारवर्त्तिनस्ते च ते जीवाश्च तेषामभिगमः संसारसमापन्नजीवाभिगमः, तथा न संसारोऽसंसारः—संसारप्रतिपक्षभूतो मोक्ष इत्यर्थः तं समापन्ना असंसारसमापन्नास्ते च ते जीवाश्च तेषामभिगमोऽसंसारसमापन्नजीवाभिगमः, चशब्दौ उभयेषामपि जीवानां जीवत्वं प्रति तुल्यकक्षतासूचकौ, तेन ये विध्यातप्रदीपकल्पं निर्वाणमभ्युपगतवन्तः ये च नवानामात्मगुणानामत्यन्तोच्छेदेन ते निरस्ता द्रष्टव्याः, तथाभूतमोक्षाभ्युपगमे तदर्थं प्रेक्षावतां प्रवृत्त्यनुपपत्तेः, न खलु सचेतनः स्ववधाय कण्ठे कुठारिकां व्यापारयति, दुःखितोऽपि हि जीवन् कदाचिद् भद्रमाप्नुयात् मृतेन तु निर्मूलमपि हस्तिताः सम्पद इति, इह केवलान् अजीवान् जीवांश्चानुच्चार्याभिगमशब्दसंवलितप्रश्नोऽभिगमव्यतिरेकेण प्रतिपत्तेरसम्भवतस्तेषामभिगमगम्यताधर्मख्यापनार्थः तेन 'सदेवेद'मित्यादि सदद्वैताद्यपोह उक्तो वेदितव्यः, सदद्वैताद्यभ्युपगमेऽभिगमगम्यतारूपधर्मायोगतः प्रतिपत्तेरेवासम्भवात् । तत्राल्पवक्तव्यत्वात्प्रथमतोऽसंसारसमापन्नजीवाभिगमसूत्रम्—'से किं तं असंसारसमावन्नजीवाभिगमे?, २ दुविहे पं०, तं०—अनंतरसिद्धअसंसारसमावन्नजीवाभिगमे परंपरसिद्धअसंसारसमावन्नजीवाभिगमे य' इत्यादि तावद्वाच्यं यावदुपसंहारवाक्यं 'सेत्तं असंसारसमापन्नजीवाभिगमे' अस्य व्याख्यानं प्रज्ञापनाटीकातो वेदितव्यं, तत्र सविस्तरमुक्तत्वात् ॥ सम्प्रति संसारसमापन्नजीवाभिगममभिधित्सुस्तत्प्रश्नसूत्रमाह—

**से किं तं संसारसमावन्नजीवाभिगमे?, संसारसमावण्णएसु णं जीवेसु इमाओ णव पडिवत्तीओ**

एवमाहिज्जंति, तं०–एगे एवमाहंसु–दुविहा संसारसमावण्णगा जीवा पं०, एगे एवमाहंसु–तिविहा
संसारसमावण्णगा जीवा पं०, एगे एवमाहंसु–चउव्विहा संसारसमावण्णगा जीवा पं०, एगे
एवमाहंसु–पंचविहा संसारसमावण्णगा जीवा पं०, एतेणं अभिलावेणं जाव दसविहा संसार-
समावण्णगा जीवा पण्णत्ता ( सू० ८ )

सूरिराह—संसारसमापन्नेषु णमिति वाक्यालङ्कारे जीवेषु 'इमाः' वक्ष्यमाणलक्षणा 'नव प्रतिपत्तयो' द्विप्रत्यवतारमादौ कृत्वा
दशप्रत्यवतारं यावद् ये नव प्रत्यवतारास्तद्रूपाणि प्रतिपादनानि संवित्तय इतियावत् 'एवं' वक्ष्यमाणया रीत्याऽऽख्यायन्ते पूर्वसूरिभिः,
इह प्रतिपत्त्याख्यानेन प्रणालिकयाऽर्थाख्यानं द्रष्टव्यं, प्रतिपत्तिभावेऽपि शब्दादर्थे प्रवृत्तिकरणात्, तेन यदुच्यते शब्दाद्वैतवादिभिः—
'शब्दमात्रं विश्व'मिति, तदपास्तं द्रष्टव्यं, तदपासने चेयमुपपत्तिः—एकान्तैकस्वरूपे वस्तुन्यभिधानद्वयासम्भवात् भिन्नप्रवृत्तिनिमित्ता-
भावात्, ततश्च शब्दमात्रमित्येव स्यात् न विश्वमिति, प्रणालिकयाऽर्थाभिधानमेवोपदर्शयति, तद्यथा—एके आचार्या एवमाख्यातवन्तः—
द्विविधाः संसारसमापन्ना जीवाः प्रज्ञप्ताः, एके आचार्या एवमाख्यातवन्तः—त्रिविधाः संसारसमापन्ना जीवाः, एवं यावद्दशविधा इति,
इह एके इति न पृथग्मतावलम्बिनो दर्शनान्तरीया इव केचिदन्ये आचार्याः, किन्तु य एव पूर्वं द्विप्रत्यवतारविवक्षायां वर्त्तमाना एव-
मुक्तवन्तः यथा द्विविधाः संसारसमापन्ना जीवा इति त एव त्रिप्रत्यवतारविवक्षायां वर्त्तमानाः, द्विप्रत्यवतारविवक्षामपेक्ष्य त्रिप्रत्यवतार-
विवक्षाया अन्यत्वात्, विवक्षावतां तु कथञ्चिद् भेदादन्य इति वेदितव्याः, अत एव प्रतिपत्तय इति परमार्थतोऽनुयोगद्वाराणीति
प्रतिपत्तव्यम्, इह य एव द्विविधास्त एव त्रिविधास्त एव चतुर्विधा यावद्दशविधा इति तेषामनेकस्वभावतायां तत्तद्धर्मभेदेन तथा

तथाऽभिधानता युज्यते, नान्यथा, एकान्तैकस्वभावतायां तेषां वैचित्र्यायोगतस्तथा तथाऽभिधानप्रवृत्तेरसम्भवात्, एवं सति "अष्टविकल्पं दैवं तिर्यग्योनं च पञ्चधा भवति । मानुष्यं चैकविधं समासतो भौतिकः सर्गः ॥ १ ॥" इति वाङ्मात्रमेव, अधिष्ठातृजीवानामेकरूपत्वाभ्युपगमेन तथारूपवैचित्र्यासम्भवादिति, एवमन्येऽपि प्रवादास्तथा तथा वस्तुवैचित्र्यप्रतिपादनपरा निरस्ता द्रष्टव्याः, सर्वथैकस्वभावत्वाभ्युपगतौ वैचित्र्यायोगात् ॥ सम्प्रत्येता एव प्रतिपत्तीः क्रमेण व्याचिख्यासुः प्रथमत आद्यां प्रतिपत्तिं विभावयिषुरिदमाह—

**तत्थ(णं) जे एवमाहंसु 'दुविहा संसारसमावण्णगा जीवा पं०' ते एवमाहंसु—तं०—तसा चेव थावरा चेव ॥ (सू० ९)**

'तत्र' तेषु नवसु प्रतिपत्तिषु मध्ये ये द्विप्रत्यवतारविवक्षायां वर्त्तमाना एवं व्याख्यातवन्तः—द्विविधाः संसारसमापन्नका जीवाः प्रज्ञप्ता इति ते 'णम्' इति वाक्यालङ्कारे 'एवं' वक्ष्यमाणरीत्या द्विविधत्वभावनार्थमाख्यातवन्तः, 'तद्यथे' त्युपन्यस्तद्वैविध्योपदर्शनार्थः, त्रसाश्चैव स्थावराश्चैव, तत्र त्रसन्ति—उष्णाद्यभितप्ताः सन्तो विवक्षितस्थानादुद्विजन्ति गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसाः, अनया च व्युत्पत्त्या त्रसास्त्रसनामकर्मोदयवर्त्तिन एव परिगृह्यन्ते, न शेषाः, अथ शेषैरपीह प्रयोजनं, तेषामप्यग्रे वक्ष्यमाणत्वात्, तत एवं व्युत्पत्तिः—त्रसन्ति—अभिसन्धिपूर्वकमनभिसन्धिपूर्वकं वा ऊर्द्ध्वमधस्तिर्यक् चलन्तीति त्रसाः—तेजोवायवो द्वीन्द्रियादयश्च, उष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्थाः सन्तस्तिष्ठन्तीत्येवंशीलाः स्थावराः—पृथिव्यादयः, चशब्दौ स्वगतानेकभेदसमुच्चयार्थौ, एवकाराववधारणार्थौ, अत एव संसारसमापन्नका जीवाः, एतद्व्यतिरेकेण संसारिणामभावात् ॥ तत्राल्पवक्तव्यत्वात्प्रथमतः स्थावरानभिधित्सुस्तत्प्रश्नसूत्रमाह—

**से किं तं थावरा?, २ तिविहा पन्नत्ता, तंजहा–पुढविकाइया १ आउक्काइया २ वणस्सइकाइया ३ ॥ (सू० १०)**

अथ के ते स्थावराः?, सूरिराह–स्थावरास्त्रिविधाः प्रज्ञप्ताः, तद्यथा–पृथिवीकाया एव पृथिवीकायिकाः, आर्षत्वात्स्वार्थे इकप्रत्ययः, आपो–द्रवास्ताश्च प्रतीताः ता एव कायः–शरीरं येषां ते अप्कायाः अप्काया एवाप्कायिकाः, वनस्पतिः–लतादिरूपः प्रतीतः स एव कायः–शरीरं येषां ते वनस्पतिकायाः वनस्पतिकाया एव वनस्पतिकायिकाः, सर्वत्र बहुवचनं बहुत्वख्यापनार्थं, तेन 'पृथिवी देवते'-त्यादिना यत्तदेकजीवत्वमात्रप्रतिपादनं तदपास्तमवसेयं, यदि पुनस्तदधिष्ठात्री काचनापि देवता परिकल्प्यते तदानीमेकत्वेऽप्यविरोधः। इह सर्वभूताधारः पृथिवीति प्रथमं पृथिवीकायिकानामुपादानं, तदनन्तरं तत्प्रतिष्ठितत्वादप्कायिकानां, तदनन्तरं "जत्थ जलं तत्थ वणं" इति सैद्धान्तिकवस्तुप्रतिपादनार्थं वनस्पतिकायिकानामिति, इह त्रिविधत्वं स्थावराणां तेजोवायूनां लब्ध्या स्थावराणामपि सतां गतित्रसेष्वन्तर्भावविवक्षणात्, तथा च तत्त्वार्थसूत्रमप्येवं व्यवस्थितं "पृथिव्यम्बुवनस्पतयः स्थावराः ॥ तेजोवायू द्वीन्द्रियादयश्च त्रसाः" (तत्त्वा० अ० २ सू० १३–१४) इति, तत्र 'यथोद्देशं निर्देश' इति प्रथमतः पृथिवीकायिकप्रतिपादनार्थमाह—

**से किं तं पुढविकाइया?, २ दुविहा पं०, तं०–सुहुमपुढविक्काइया य बायरपुढविक्काइया य ॥ (सू० ११)**

अथ के ते पृथिवीकायिकाः?, सूरिराह–पृथिवीकायिका द्विविधाः प्रज्ञप्ताः, तद्यथा–सूक्ष्मपृथिवीकायिकाश्च बदरपृथिवीकायिकाश्च, तत्र सूक्ष्मनामकर्मोदयात्सूक्ष्मा वादरनामकर्मोदयात्तु वादराः, कर्मोदयजनिते खल्वेते सूक्ष्मवादरत्वे, नापेक्षिके वदरामलकयो-

रिव, सूक्ष्माश्च ते पृथिवीकायिकाश्च सूक्ष्मपृथिवीकायिकाः, बादराश्च ते पृथिवीकायिकाश्च बादरपृथिवीकायिकाः, चशब्दौ स्वगतानेकभेदसूचकौ, सूक्ष्माः सकललोकवर्त्तिनो बादराः प्रतिनियतैकदेशधारिणः ॥ तत्र सूक्ष्मपृथिवीकायिकप्रतिपादनार्थमाह—

**से किं तं सुहुमपुढविक्काइया?, २ दुविहा पं०, तं०—पज्जत्तगा य अपज्जत्तगा य ॥ (सू० १२)**

अथ के ते सूक्ष्मपृथिवीकायिकाः?, सूरिराह—सूक्ष्मपृथिवीकायिका द्विविधाः प्रज्ञप्ताः, तद्यथा—पर्याप्तकाश्चापर्याप्तकाश्च, तत्र पर्याप्तिर्नामाहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः, स च पुद्गलोपचयादुपजायते, किमुक्तं भवति?—उत्पत्तिदेशमागतेन प्रथमं ये गृहीताः पुद्गलास्तेषां तथाऽन्येषामपि प्रतिसमयं गृह्यमाणानां तत्संपर्कतस्तद्रूपतया जातानां यः शक्तिविशेष आहारादिपुद्गलखलरसरूपतापादनहेतुर्यथोदरान्तर्गतानां पुद्गलविशेषाणामाहारपुद्गलविशेषाणामाहारपुद्गलखलरसरूपतापरिणमनहेतुः सा पर्याप्तिः, सा च षोढा, तद्यथा—आहारपर्याप्तिः १ शरीरपर्याप्तिः २ इन्द्रियपर्याप्तिः ३ प्राणापानपर्याप्तिः ४ भाषापर्याप्तिः ५ मनःपर्याप्तिश्च ६, तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति साऽऽहारपर्याप्तिः १, यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः २, यया धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः ३, यया पुनरुच्छ्वासप्रायोग्यवर्गणापुद्गलानादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्तिः ४, यया तु भाषाप्रायोग्यान् पुद्गलानादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः ५, यया पुनर्मनःप्रायोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिः ६, एताश्च यथाक्रममेकेन्द्रियाणां सञ्ज्ञिवर्जानां द्वीन्द्रियादीनां संज्ञिनां च चतुष्पञ्चषट्सङ्ख्या भवन्ति, उत्पत्तिप्रथमसमये एव च एता यथायथं सर्वा अपि युगपन्निष्पादयितुमारभ्यन्ते क्रमेण च निष्ठामुपयान्ति,

तद्यथा—प्रथममाहारपर्याप्तिस्ततः शरीरपर्याप्तिस्तत इन्द्रियपर्याप्तिरित्यादि, आहारपर्याप्तिश्च प्रथमसमय एव निष्पत्तिमुपगच्छति, शेषास्तु प्रत्येकमन्तर्मुहूर्त्तेन कालेन, अथाहारपर्याप्तिः प्रथमसमय एव निष्पद्यत इति कथमवसीयते?, उच्यते, इह भगवताऽऽर्यश्यामेन प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रमिदमपाठि—"आहारपज्जत्तीए अपज्जत्तए णं भंते! किं आहारए अणाहारए?, गोयमा! नो आहारए अणाहारए" इति, तत आहारपर्याप्त्या अपर्याप्तो विग्रहगतावेवोपपद्यते नोपपातक्षेत्रमागतोऽपि, उपपातक्षेत्रसमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामायिकी आहारपर्याप्तिनिर्वृत्तिः, यदि पुनरुपपातक्षेत्रसमागतोऽप्याहारपर्याप्त्या अपर्याप्तः स्या-त्तत एवं व्याकरणसूत्रं पठेत्—"सिय आहारए सिय अणाहारए" यथा शरीरादिपर्याप्तिषु "सिय आहारए सिय अणाहारए" इति, सर्वासामपि च पर्याप्तीनां पर्याप्तिपरिसमाप्तिकालोऽन्तर्मुहूर्त्तप्रमाणः, पर्याप्तयो विद्यन्ते येषां ते पर्याप्ताः, 'अभ्रादिभ्य' इति मत्वर्थीयोऽप्रत्ययः, पर्याप्ता एव पर्याप्तकाः, ये पुनः स्वयोग्यपर्याप्तिपरिसमाप्तिविकलास्तेऽपर्याप्ताः अपर्याप्ता एवापर्याप्तकाः, ते द्विधा—लब्ध्या करणैश्च, तत्र येऽपर्याप्तका एव म्रियन्ते ते लब्ध्याऽपर्याप्तकाः, ये पुनः करणानि—शरीरेन्द्रियादीनि न तावन्निर्वर्त्तयन्ति अथचावश्यं निर्वर्त्तयिष्यन्ति ते करणापर्याप्ताः संप्राप्ताः ॥ सम्प्रति विनेयजनानुग्रहाय शेषवक्तव्यतासङ्ग्रहार्थमिदं सङ्ग्रहणिगाथाद्वयमाह—सरीरोगाहणसंघयण संठाणकसाय तह य हुंति सन्नाओ। लेसिंदियसमुग्घाए सन्नी वेए य पज्जत्ती ॥ १ ॥ दिट्ठी दंसणनाणे जोगुवओगे तहा किमाहारे। उववायठिई समुग्घाय चवणगइरागई चेव ॥ २ ॥ अस्य व्याख्या—प्रथमतः सूक्ष्मपृथिवीकायिकानां शरीराणि वक्तव्यानि, तदनन्तरमवगाहना, ततः संहननं, तदनन्तरं संस्थानं, ततः कषायाः, ततः कति भवन्ति सञ्ज्ञाः? इति वक्तव्यं, ततो लेश्याः, तदनन्तरमिन्द्रियाणि, ततः समुद्घाताः, ततः किं सञ्ज्ञिनोऽसञ्ज्ञिनो वा? इति वक्तव्यं, तदनन्तरं वेदो वक्तव्यः, ततः पर्याप्तयो

यथा कति पर्याप्तयः सूक्ष्मपृथिवीकायिकानाम्? इत्यादि, पर्याप्तिग्रहणमुपलक्षणं तेन तत्प्रतिपक्षभूता अपर्याप्तयोऽपि वक्तव्या इति द्रष्टव्यं, तदनन्तरं दृष्टिर्वक्तव्या, ततो दर्शनं, तदनन्तरं ज्ञानं, ततो योगः, तत उपयोगः, तथा किमाहारमाहारयन्ति सूक्ष्मपृथिवीकायिकाः? इत्यादि वक्तव्यं, तदनन्तरमुपपातः, ततः स्थितिः, ततः समुद्घातः समुद्घातमधिकृत्य मरणं वक्तव्यमित्यर्थः, तदनन्तरं च्यवनं, ततो गत्यागती इति, इति सर्वसङ्ख्यया त्रयोविंशतिर्द्वाराणि, तत्र प्रथमद्वारव्याख्यानार्थमाह—

**तेसि णं भंते! जीवाणं कतिसरीरया पण्णत्ता, गोयमा! तओ सरीरगा पं०, तं०—ओरालिए तेयए कम्मए॥तेसि णं भंते! जीवाणं केमहालिया सरीरोगाहणा पं०, गो०! जहन्नेणं अंगुलासंखेज्जतिभागं उक्कोसेणवि अंगुलासंखेज्जतिभागं॥ तेसि णं भंते! जीवाणं सरीरा किंसंघयणा पण्णत्ता?, गोयमा! छेवट्ठसंघयणा पण्णत्ता ॥ तेसि णं भंते! सरीरा किंसंठिया पं०?, गोयमा! मसूरचंदसंठिता पण्णत्ता॥ तेसि णं भंते! जीवाणं कति कसाया पण्णत्ता?, गोयमा! चत्तारि कसाया पण्णत्ता, तंजहा—कोहकसाए माणकसाए मायाकसाए लोहकसाए॥ तेसि णं भंते! जीवाणं कति सण्णा पण्णत्ता?, गोयमा! चत्तारि पण्णत्ता, तंजहा—आहारसण्णा जाव परिग्गहसन्ना॥ तेसि णं भंते! जीवाणं कति लेसाओ पण्णत्ताओ?, गोयमा! तिन्नि लेस्सा पन्नत्ता, तंजहा—किण्हलेस्सा नीललेसा काउलेसा॥ तेसि णं भंते! जीवाणं कति इंदियाइं पण्णत्ताइं?, गोयमा! एगे फासिंदिए पण्णत्ते॥ तेसि णं भंते! जीवाणं कति समुग्घाया पण्णत्ता?, गोयमा! तओ समुग्घाया पण्णत्ता, तंजहा—**

वेयणासमुग्घाते कसायसमुग्घाए मारणंतियसमुग्घाए ॥ ते णं भंते! जीवा किं सन्नी असन्नी ?, गोयमा! नो सन्नी असन्नी ॥ ते णं भंते! जीवा किं इत्थिवेया पुरिसवेया णपुंसगवेया ?, गोयमा! णो इत्थिवेया णो पुरिसवेया णपुंसगवेया ॥ तेसि णं भंते! जीवाणं कति पज्जत्तीओ पण्णत्ताओ ?, गोयमा! चत्तारि पज्जत्तीओ पण्णत्ताओ, तंजहा–आहारपज्जत्ती सरीरपज्जत्ती इंदियपज्जत्ती आणपाणुपज्जत्ती। तेसि णं भंते! जीवाणं कति अपज्जत्तीओ पण्णत्ताओ ?, गोयमा! चत्तारि अपज्जत्तीओ पण्णत्ताओ, तंजहा–आहारअपज्जत्ती जाव आणापाणुअपज्जत्ती ॥ ते णं भंते! जीवा किं सम्मदिट्ठी मिच्छादिट्ठी सम्मामिच्छादिट्ठी ?, गोयमा! णो सम्मदिट्ठी मिच्छादिट्ठी नो सम्ममिच्छादिट्ठी ॥ ते णं भंते! जीवा किं चक्खुदंसणी अचक्खुदंसणी ओहिदंसणी केवलदंसणी ?, गोयमा! नो चक्खुदंसणी अचक्खुदंसणी नो ओहिदंसणी नो केवलदंसणी ॥ ते णं भंते! जीवा किं नाणी अण्णाणी ?, गोयमा! नो नाणी अण्णाणी, नियमा दुअण्णाणी, तंजहा–मतिअन्नाणी सुयअण्णाणी य ॥ ते णं भंते! जीवा किं मणजोगी वयजोगी कायजोगी ?, गोयमा! नो मणजोगी नो वयजोगी कायजोगी ॥ ते णं भंते! जीवा किं सागारोवउत्ता अणागारोवउत्ता ?, गोयमा! सागारोवउत्तावि अणागारोवउत्तावि ॥ ते णं भंते! जीवा किमाहारमाहारेंति ?, गोयमा! दव्वतो अणंतपदेसियाइं खेत्तओ असंखेज्जपदेसोगाढाइं कालओ अन्नयर-

समयट्ठितीयाइं भावतो वण्णवं(मं)ताइं गंधवं(मं)ताइं रसवं(मं)ताइं फासवं(मं)ताइं ॥ जाइं भावओ वण्णमंताइं आ०, ताइं किं एगवण्णाइं आ० दुवण्णाइं आ० तिवण्णाइं आ० चउवण्णाइं आ० पंचवण्णाइं आ० ?, गोयमा! ठाणमग्गणं पडुच्च एगवण्णाइंपि दुवण्णाइंपि तिवण्णाइंपि चउवण्णाइंपि पंचवण्णाइंपि आ०, विहाणमग्गणं पडुच्च कालाइंपि आ० जाव सुक्किलाइंपि आ०, जाइं वण्णओ कालाइं आ० ताइं किं एगगुणकालाइं आ० जाव अणंतगुणकालाइं आ० ?, गोयमा! एगगुणकालाइंपि आ० जाव अणंतगुणकालाइंपि आ० एवं जाव सुक्किलाइं ॥ जाइं भावतो गंधमंताइं आ० ताइं किं एगगंधाइं आ० दुगंधाइं आ० ?, गोयमा! ठाणमग्गणं पडुच्च एगगंधाइंपि आ० दुगंधाइंपि आ०, विहाणमग्गणं पडुच्च सुब्भिगंधाइंपि आ० दुब्भिगंधाइंपि आ०, जाइं गंधतो सुब्भिगंधाइं आ० ताइं किं एगगुणसुब्भिगंधाइं आ० जाव अणंतगुणसुरभिगंधाइं आ० ?, गोयमा! एगगुणसुब्भिगंधाइंपि आ० जाव अणंतगुणसुब्भिगंधाइंपि, आ० एवं दुब्भिगंधाइंपि ॥ रसा जहा वण्णा ॥ जाइं भावतो फासवं(मं)ताइं आ० ताइं किं एगफासाइं आ० जाव अट्ठफासाइं आ० ?, गोयमा! ठाणमग्गणं पडुच्च नो एगफासाइं आ० नो दुफासाइं आ० नो तिफासाइं आ० चउफासाइं आ० पंचफासाइंपि जाव अट्ठफासाइंपि आ०, विहाणमग्गणं पडुच्च कक्खडाइंपि आ० जाव लुक्खाइंपि आ०, जाइं फासतो कक्खडाइं आ०

ताइं किं एगगुणकक्खडाइं आ० जाव अणंतगुणकक्खडाइं आ० ?, गोयमा ! एगगुणकक्खडाइंपि आ० जाव अणंतगुणकक्खडाइंपि आ० एवं जाव लुक्खा णेयव्वा ॥ ताइं भंते ! किं पुट्ठाइं आ० अपुट्ठाइं आ० ?, गोयमा ! पुट्ठाइं आ० नो अपुट्ठाइं आ०, ताइं भंते ! ओगाढाइं आ० अणोगाढाइं आ० ?, गोयमा ! ओगाढाइं आ० नो अणोगाढाइं आ०, ताइं भंते ! किमणंतरोगाढाइं आ० परंपरोगाढाइं आ० ?, गोयमा ! अणंतरोगाढाइं आ० नो परंपरोगाढाइं आ०, ताइं भंते ! किं अणूइं आ० बायराइं आ० ?, गोयमा ! अणूइंपि आ० बायराइंपि आहारेंति, ताइं भंते ! उड्ढं आ० अहे आ० तिरियं आहारेंति ?, गोयमा ! उड्ढंपि आ० अहेवि आ० तिरियंपि आ०, ताइं भंते ! किं आइं आ० मज्झे आ० पज्जवसाणे आहारेंति ?, गोयमा ! आदिंपि आ० मज्झेवि आ० पज्जवसाणेवि आ०, ताइं भंते ! किं सविसए आ० अविसए आ० ?, गोयमा ! सविसए आ० नो अविसए आ०, ताइं भंते ! किं आणुपुव्विं आ० अणाणुपुव्विं आहारेंति ?, गोयमा ! आणुपुव्विं आहारेंति नो अणाणुपुव्विं आहारेंति, ताइं भंते ! किं तिदिसिं आहारेंति चउदिसिं आहारेंति पंचदिसिं आहारेंति छदिसिं आहारेंति ?, गोयमा ! निव्वाघाएणं छदिसिं, वाघातं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं, उस्सन्नकारणं पडुच्च वण्णतो काला नीला जाव सुक्किलाइं, गंधतो सुब्भिगंधाइं दुब्भिगंधाइं, रसतो जाव तित्तमहुराइं, फासतो

